क्षणेन वा तद्वती इला । "अभि न इळा यूथस्य माता (ऋ० सं० ४,२,१६,४)"—इति निगमः ॥

(४) गौः*। व्याख्याता पृथिवीनामसु(१)। गच्छति यज्ञेष्वाहूता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभीवृता (ऋ० सं० २,३,१९,४)"—इति निगमः ॥

(५) गौरी†। रोचतेर्ज्वलतिकर्मणः (निघ० १,१६)। 'ऋज्रेन्द्राग्रवज्रविप्रकुत्र (उ० २,२७)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौर-शब्दो निपातितः, तस्माद्रुचेर्धातोर्गावादेशः, 'षिद्गौरादिभ्यश्च (४,१,४१)'—इति ङीष्। स्वया दीप्त्या ज्वलति वाग्देवतात्वात्। यद्वा; 'गूरी उद्यमने (तु० आ०)', अस्मात् इनि पूर्ववन्निपातनादुकारस्यौकारः, 'रोरि (८,३,१४)'—इति रेफलोपः, ङीष्; गुरते उद्यच्छति स्वमभिधेयम्; उद्यमनं चारु प्रकाशनम्। यद्वा; 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'—इत्यस्मान्निपातनादिनि वृद्धिः; गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा; शुक्लवर्णत्वात् गौरी, 'भास्वत्-कपर्दां शशिकलामिन्दुकुन्दावदन्ताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २,३,२२,१)"—"सेमां गौरी अधिश्रितः (ऋ० सं० ६,७,३८,३)"—इति च निगमौ ॥

(६) गान्धर्वी। गविगन्ध्यज्ञो वः ( ? )। 'धृञ् धारणे (भ्वा० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः; गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति

---

* पु० १। † प० ५, ५। निरु० ११, ३९।

व-प्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातुश्चुरादिरात्मने-पदी। 'तस्येदम् (४,३,१२०)'—इत्यण्, ङीप् (४,१,१५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वाग्घैन्द्री (ऐ०ब्रा०२,४,२)'—इति। यद्वा; गन्धर्वा देवानां गायकाः, तेषामियम्। तथा-चैतरेयब्राह्मणे—'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ०ब्रा०१,५,१)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्। 'तां गन्धर्वोऽवदीत् गर्भे अन्तः'—इति श्रुतिः। "अग्निर्गान्धर्वीं पथ्या ऋतस्य (ऋ० सं०८,३,१५,६)"—इति निगमः॥

(७) गभीरा*, (८) गम्भीरा†। भीयन्ति (दि०प०) रातीति (अदा०प०) भीराः। 'आतोऽनुपसर्गे कः (३,२,३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६,३,१०९) गो-शब्दस्य ग-भावो गम्भावश्च। स्तनयित्नु-लक्षणा हि माध्यमिका वाक् श्रूय-माणैव सर्वप्राणिनां भियमादधाति। यद्वा; उणादौ गभीरादि-सूत्रेण गमेर्धातोरीरन्-प्रत्यये नुमागमो मकारस्य विकल्पेन लोपो निपात्यते (उ०४,३४)। गच्छति यज्ञे, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा; 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ०), अस्य ह्रस्वत्वं, भश्चान्तादेशः, वा च नुम् निपात्यते। प्रतिष्ठिता स्वस्मिन् स्थाने, लिप्स्यन्ते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

---

* प० १२. ३, ३;—३०। † प० ३, ३०।

(९) मन्द्रा* । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भ्वा० आ०)'। गच्छति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः । "स मन्द्रया च जिह्वया (ऋ० सं० ५,२,२२,३)"—इति निगमः ॥

(१०) मन्द्राजनी । मन्द्रशब्दो व्याख्यातः । 'अज गतिक्षेपणयोः (भ्वा० प०)', ल्युट् । मन्द्र मजनं गमनं क्षेपणं प्रेरण मुच्चारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम् । (४,१,४१ग०) "मन्द्राजनी चोदते अन्तरासनि (ऋ० सं० ७,२,२१,२)"—इति निगमः ॥

(११) वाशी† । 'वाशृ शब्दे' दैवादिकः (आ०)। 'वसिवपियजिराजिव्रजिध्वजिसदिहनिकमिवाशिवादिवारिभ्य इञ् (उ० ४,१२१) कर्मणि कारके वा दृश्यते, वाशिः । 'कृदिकारादक्तिनः (४,१,४५ वा०)'—इति ङीष्, वाशी । "ते वाशीमन्त इष्मिणो अभीरवो (१,६,१३,६)"—"वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८,५,१९,४)"—इति च निगमौ ॥

(१२) वाणी‡ । 'वणि शब्दे (भ्वा० प०)' । बाहुलकादिञ् (उ० ४, १२१।३,३,१), ङीष् (४,१,४५ वा०) । "वाणीः पुरुहूतं धमन्तीः (ऋ० सं० ३,२,२,१०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७,५,६,३)"—इति निगमौ ॥

(१३) वाणीची । वाणीं स्तुतिरूपां वाच मञ्चति गच्छतीति विगृह्य 'ऋत्विगित्यादिना (३,२,५९) क्विनि, न-लोपे, 'अचः

* निघ० ११, २८;—२९ ।
† प० ४, १ । निरु० ४, १६ ;—१९ ।
‡ निरु० ६, २ ।

(६,४,१३८)'—इत्यकारलोपे 'अञ्चतेश्चोपसङ्ख्यानम् (४,१,६वा०)' —इति ङीप्। "रथे वाणीच्याहिता (ऋ०सं० ४,४,१५,४)"—इति निगमः ॥

(१४) वाणः। वण्यते शब्द्यते वाणः। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। यद्वा; वणनं शब्दनं वाणः, भावे घञ् (३,३,१८), अर्शआदित्वादच् (५,२,१२७)। स्तुतिमती हि वाक्। "दीना दक्षा वि दुहन्ति प्र वाणम् (ऋ०सं० ३, ६,१२,४)"—इति निगमः ॥

(१५) पविः*। 'पूञ् पवने (क्र्या०उ०)'; 'अचइः (उ०४, १३४)'—इति इ-प्रत्ययः। पुनाति हि वाक्। 'पावका नः सरस्वती (ऋ०सं० १,१,६,३)'—इति मन्त्रः। पूयते वा सङ्कीर्त्तनादिना, 'वाचं शौरिकथालापप्रसङ्गे पुनीमहे' इत्युक्तेः। पूयतेऽनयेति वा शुद्धिकरणं हि वाक्। 'पवित्रं हि वाग् विदुषाम्'—इति माधवः। "वाणस्य चोदया पविम् (ऋ०सं० ७,१,७,१)"—इति निगमः ॥

(१६) भारती†। 'डु भृञ् धारणपोषणयोः (भ्वा०उ०)'; 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३,१०७)'। भरतशब्दात् 'प्रज्ञादिभ्यश्च (५,४,३८)'—इति स्वार्थिकोऽण्, ङीप् (४, १,१५)। बिभर्त्ति जगद्धर्षप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन। अथवा 'अग्निर्भरतः, प्राणो भूत्वा हवींषि बिभर्त्ति'—इति वाजसनेयकम्; तदीया भारती। तथाच 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ०उ०१,९)।

---

* प० २, २०. ४, २। निरु० ५, ५. १२, ३०। † निरु० ८, १२।

अथवा 'भरतः (निघ० ३,१८)'—इति ऋत्विङ्नाम ; तदीया, स्तुति-साधनत्वात् भारती । "आ भारती भारतीभिः सजोषा (ऋ०सं० २,८,२३,३)"—इति निगमः ॥

(१७) धमनिः* । धमतिर्गतिकर्म्मा (निघ० २,१४), 'अर्त्तिसृधृ-धम्यम्यश्यवितॄभ्योऽनिः (उ० २,९५)'—इत्यनि-प्रत्ययः । गत्यर्था बुद्ध्यर्थाः । गम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्व-साधुविभागेन । यद्वा ; 'धमति'—इति बधकर्मस्वपि पठ्यते (निघ० २,१९) । हन्त्यनया शापाक्रोशादिरूपयेति । तथाच 'वज्र एव वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २,३,२) । 'वाक्सायका वदनान्निः-सरन्ति यैराहताः'—इति च महाभारतम् । "इन्द्रेषितां धमनिं पप्रथन्नि (ऋ०सं० २,६,४,३)"—इति निगमः ॥

(१८) नाळीः । 'नल गन्धे (भ्रू०प०)' ; 'वसिवपियजिराजिव्रजि (उ० ४,१२१)'—इत्यादिना विहितः इञ्-प्रत्ययो बाहुलकात् भवति, 'कृदिकारात् (४,१,४५वा०)'—इति ङीष्, व्यत्ययेन सोर्वि-सर्जनीयः । 'गन्ध अर्द्दने (चु०आ०)', 'अर्द्द हिंसायाम् (भ्रू०प०)' —इति पठ्यते । गन्धनं हिंसात्मकं सूचनम्, सूचयति परम-र्माणि । "श्रमस्य धम्यते नाळीः (ऋ०सं० ८,७,२३,७)"—इति निगमः ॥

(१९) मेना† । 'मान पूजायाम् (चु०आ०)'—इत्यस्मात् 'बहु-लमन्यत्रापि इनच् भवति (उ० २,४६)'—इति वचनादिनच्, बहुल-

---

* निरु० ६, २४ ।

† प० ३, २९ । निरु० ३, २१ ।

ग्रहणान्न-लोपः। पूज्यतेऽनया गुर्वादिरुपदेशवाक्येन, पूज्या वा देव-तात्वात्। "आन्मेनां कृण्वन्नच्युतो भुवद्गोः (ऋ०सं० ८,६,१०३)" —इति निगमः। 'मेनां गर्जितशब्दम्'—इति माधवः॥

(२०) मेळिः*। सम्पर्कार्थो धातुः (चु०आ०)। पूर्ववत् बाऌलकादिन्। सम्पृक्ता ह्यर्थेन वाक्। तथाच—'वागर्थाविव सम्पृक्तौ'—इति (रघौ १,१) कालिदासः। 'मेळिं मदन्तं पित्रोरुपस्थे (ऋ०सं० ३,१,२७,४)"—इति निगमः। मत्वर्थीयस्य लुकि वाग्मिन मि-त्यर्थः। "मेलिः स्यात् वाणयोजनात्"—इति माधवः†॥

(२१) सूर्या‡। सर्त्तेर्गत्यर्थात् (भू०प०), सुवतेर्वा प्रेरणार्थात् (तु०प०) 'राजसूयसूर्य (३,१,११४)'—इत्यादिना निपातनात् क्यपि सर्त्तेरुत्वं सुवतेर्वा रुड़ागमः। सरति गच्छति स्रोतॄन् प्रति, कर्णशष्कुलिं वा सुवति प्रेरयति चोदनारूपा पुरुषादीनिदं कुर्विति। यद्वा; सुपूर्वादीरतेः 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्मणि क्यपि निपातनाद्रूपसिद्धिः। सुष्ठु ईर्यते उच्चार्यते इति सूर्या। यद्वा; 'षु प्रेरणे (स्वा०उ०)', 'सुसूधीगृधिभ्यः क्रन् (उ०२,२३)'—इति क्रन्-प्रत्ययः। प्रेर्यते उच्चारणकाले प्राणेन सूरा 'छन्दसि स्वार्थे ( ? )'—इति यत् प्रत्ययः, सूर्या। यद्वा; सूरयो मेधाविनः, तानर्हति 'छन्दसि च (५,१,६७)'—इति यत्

---

* प० ५,७।

† 'मेलिं मेलकं नानाशाखागतानां वाक्यानाम् एकस्मिन्नर्थे सङ्कल(स्य)य्य वक्तारम्' —इति सायणः।

‡ प० ५,६। निरु० ११,७।

प्रत्ययः। यद्वा; सूरिषु साधुः 'तत्र साधुः (४,४,९८)'—इति यत्। निगमोऽन्वेषणीयः ॥

(२२) सरस्वती*। सर्त्तेरसुन् (उ० ४,१८४) सरः। गद्यपद्यादि-रूपेण प्रसरणमस्यास्तीति 'अस्मायामेधास्रजोविनिः (५,२,१२१), 'बहुलं छन्दसि (५,२,१२२)'—इत्युक्ते मतुपि ङीष्। यद्वा; सर इत्युदकनाम (निघ० १,१२)। सर्त्तेस्तद्वती वृष्ट्यधिदेवतात्वादुदक-वती हि माध्यमिका वाक्। सैव चासीन्नदी सरस्वती। तदुक्तं भाष्यकारेण—'तत्र सरस्वतीत्येतस्य नदीवत् देवतावच्च निगमा भवन्ति (निरु० २,२३)'—इत्यादिना। "पावका नः सरस्वती (ऋ० सं० १, १,६,३)"—इति निगमः देवतायाः। "इयं शुष्मेभिः (ऋ० सं० ४,८,३०,२)"—इत्येषा नद्याः ॥

(२३) निवित्। 'विद ज्ञाने (अदा० प०)', नि-पूर्वः। 'सत्सू द्विषद्रुहदुह (३,२,६१)'—इत्यादिना क्विपि [अन्तर्णीतण्यर्थस्यात्र विदिः] नितरां वेदयति ज्ञापयति स्वमभिधेयम्। "तान् पूर्वया निविदा हूमहे वयम् (ऋ०सं० १,६,१५,३)"—इति निगमः ॥

(२४) स्वाहा†। यस्य नाम्नो यादृङ्निर्वचनं दृष्टं तत्सर्वं तद्रूपे-णैव लिख्यते। अत्र निरुक्तम्—'स्वाहेत्येतत् सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा (निरु० ८, २०)'—इति। अस्य स्कन्दस्वामी—स्वाहेत्येतत् स्वाहाकृति-शब्दस्य पूर्वपदं स्वाहाकारान्तो होममन्त्राणां कर्त्तव्यः, 'न ह वै आहुतयो

* प० १, १३. ५, ५। निरु० २, २३. ९, २६. ११, २५।
† प० ८, २०। निरु० ८, २०।

देवान् गच्छन्ति य अवषट्कृता वा अस्वाहाकृता वा भवन्ति (शत० ब्रा० ९, ३, ३, ६-१४)'—इतिश्रुतिः। स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यम्भावित्वात्। अयमर्थः यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह। अथवा प्रजापतेः स्वा आत्मीया वागाहेति स्वाहा-काररूपा वाक् प्रजापतिसृष्टेत्यर्थः। अथवा स्वं प्राहेति यजमानस्य, स्वं हविः देवतायै दत्तं तदुद्देशेन त्यागात्, तस्य यजमानो सौवं प्राहेति स्वाहा; सम्प्रदानत्वं स्वाहाकारस्य स्पष्टमनेन प्रकारेण दर्शितं स्वाकृतमित्यादिना। अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठुमर्यादया जुहोतीति; एवञ्च सति पूर्वकाणि निर्वचनानि ब्रूमः। इदन्तु जुहोतेरिति। अत्र भास्करमिश्रः—'स्वयं सरस्वती आह ब्रूते'। 'स्वैव ते वागित्यब्रवीत्'—इति ब्राह्मणम्। स्वयमेवाहेत्यस्यार्थस्य द्योतकोऽयं निपातः प्रदेशान्तरेऽपि विभक्त्यन्तसमुदायात्मनिपातः स्वाहेति। संस्कारविशेषानवधारणान्नावगृह्यते। अत्र क्षीरस्वामी—'सुष्ठु आह्वयति स्वाहा'। अत्र स्वाहा-शब्दो नाव्ययम् अप्यग्निजाया-वाचित्वमित्यर्थः। भाष्ये तु स्वाहा-शब्दस्य वाङ्नामत्वेनाभिव्यक्तेर्दृष्टानि निर्वचनानि लिखितानि; तेषु यथोच्छ्रितं तद् गृह्णन्तु विद्वांसः। तस्याः वाचः सृष्टौ पृथिवी चाग्निश्चेति वाचोऽग्नेश्च कारणकार्यभावः श्रूयते। 'अग्निर्वाक् भूत्वा मुखं प्राविशत् (ऐ०उ०१,९)'—इति। तस्मादग्नेर्वाचश्च सम्बन्धात् अग्नायी स्वाहा वागित्युच्यते। वाति वातात्मत्वेन वागुच्यते इति सन्देहः। निगमः सुलभः स्वाहाकारपक्षे, अन्यत्रान्वेषणीयः॥

(२५) वग्नुः। 'वच भाषणे (अदा०प०)'; 'वचेर्गश्च (उ० ३, ३२)'

इति नु-प्रत्ययः, चकारस्य गकारश्च। वग्नुः वाचा समानोऽर्थः। "वग्नुं मियन्ति यं विदे (ऋ०सं०६,८,४,१)"—"इन्द्रस्येव वग्नुरा शृण्व आजौ (ऋ०सं०७,४,१२,३)"—इति च निगमौ॥

(२६) उपब्दिः। उप-पूर्वात् पदेर्गत्यर्थात् (दि०आ०) 'इन सर्वधातुभ्यः (उ०४,११४)'—इतीन्-प्रत्ययो बाहुलकादुपधालोपः, 'न पदान्तद्विर्वचन (१,१,५८)'—इत्यनेन जश्विधिं प्रति स्थानिवद्भावनिषेधात् 'झलां जश् झशि (८,४,५३)'—इति पकारस्य बकारः। उप समीपे भक्तानां गच्छति, उप आचार्यसमीपे गम्यते इति वा। यद्वा; उ-पूर्वात् ददातेः (जु०उ०), द्यतेः (दि०प०), दयतेः (भू०आ०) वा 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति बहुलवचनात् 'उपसर्गे घोः किः (३,३,९२)'—इति कि-प्रत्ययः कर्त्तरि भवति बकारस्योपजनः। उपेत्य ददातीत्यभिलषितम्, प्रयोक्तॄणां, खण्डयत्यज्ञानं तर्कादिसमये प्रतिवादिनां वा, रचति भक्तानिति वा उपब्दिः। "आघोषयन्तः पृथिवीमुपब्दिभिः (ऋ०सं०८,४,२९,४)"—"उपब्दिरियर्त्ति सोमः (ऋ०सं०७,३,२४,५)"—"शृण्व आयता मुपब्दिः (ऋ०सं०२,४,९,२)"—इति निगमाः॥

(२७) मायुः*। 'डु मिञ् प्रक्षेपणे (क्र्या०उ०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ०१,१)', 'मीनातिमीनोतिदीङां ल्यपि च (६,१,५०)'—इत्यात्वम्, 'आतो युक् चिण्कृतोः (७,३,३३)'—इति युक्। क्षिप्यते प्रेर्यते उच्चार्यते इति मायुः, प्रक्षिपति वृष्ट्युदकं

* निघ० २, ९. ११, ४२।

भूमाविति वा। "मिमाति मायुं ध्वसनावधिश्रिता (ऋ०सं० २,३,१८,४)"—इति निगमः॥

(२८) काकुत्*। 'कैगैरै शब्दे (भू०प०)'। सम्पदादित्वात् (३,३,९४वा०) क्विप्। कानं शब्दनं करोतीति का, मृगय्वादित्वात् कुः, (उ०१,३६) बाहुलकात् तकार उपजनः। यद्वा; 'कक वक लौल्ये (भू०आ०)', 'मृग्रोरुतिन् (उ०१,९१)'—इत्येष बाहुलकाद् (३,३,१) अस्माद् भवति णिच्च काकुत्। ककते चञ्चला भवति एकस्मिन्नर्थे न प्रतितिष्ठतीत्यर्थः; तथाहि शब्दा अनेकार्था बहवः, एकार्थाश्च काक्वादिनाभिधीयमाना अनेकार्था भवन्ति। ककुदुच्चस्थान मस्यास्तीति काकुत्। मत्वर्थीयस्य लुक्, छान्दसो दीर्घः, सर्वथा पृषोदरादिरयं शब्दः। "या ते काकुत् सुकृ_ता या वरिष्ठा (ऋ०सं०४,७,१३,२)"—इति निगमः॥

(२९) जिह्वा†। 'शेवयह्वजिह्वाग्रीवाप्वामीवा'—इति निपाताः। 'लिह आस्वादने (अदा०उ०)', व-प्रत्यये, अस्यादेर्जकारो निपात्यते। लेढ्यास्वादयत्यनया ग्रन्थविषयावसारान्। यद्वा; आह्वयते (भू०उ०) जुहोते (जु०प०) र्वायं यङन्तस्य कः, सम्प्रसारणम् 'अभ्यस्तस्य च (६,१,३३)'—इति, सम्प्रसारणे च 'न धातुलोप आर्द्धधातुके (१,१,४)'—इति गुणनिषेधादुवङादेशे रूपम्। जोहुवाति पुनःपुनराह्वयति शब्दं करोति रसान् वादत्ते जुहोत्यस्यात्मनि, जोहुवा सति ओकारस्येकारादेशे उकारलोपे च जिह्वा। "पुरो

* प० ४,२। निरु० ५,२६।

† निरु० ५,२६।

विप्रा दधिरे मन्द्रजिह्वम् (ऋ० सं० ३,७,२६,१)"—"अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २,५,१२,१)"—इति च निगमौ ॥

(३०) घोषः* । 'घुष शब्दार्थः (भू० प०)'; 'हलश्च (३,३,१२१)'—इति घञ्। घुष्यते शब्द्यते घोषः । "उतो पितृभ्यां प्रविदानु घोषम् (ऋ० सं० ३,१,२,१)"—"इन्द्रे घोषा असृक्षत (ऋ० सं० ६,४,४३,१)"—इति च निगमौ ॥

(३१) स्वरः । 'स्वृ शब्दोपतपयोः (भू० प०)'; पुंसि सञ्ज्ञायां घः (३,३,११८) । स्वर्यते शब्द्यतेऽनेन देवता, उपतप्यतेऽनया मर्मस्पृक्प्रयुक्तयेति वा । स्वरतिरर्चतिकर्मा वा (निघ० ३,१) । स्वर्यते स्तूयते देवतात्वात् । 'गोचरसञ्चर (३,३,११९)'—इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् घः । यद्वा; स्वरति देवतामिन्द्रादिम्; पचाद्यच् (३,१,१३४) । "स्वरश्च मे श्लोकश्च मे (य० वा० सं० १८,१)"—इति निगमः ॥

(३२) शब्दः । शपत्याक्रोशे शाशपित्यां दानौ । अस्य वृत्तिग्रन्थः—'शपते अनेनेति शब्दः संस्कृता वाक् । झलां तृतीये इति योगविभागात् अचतुर्थेऽपि तृतीयं भवति'—इति । 'शब्दनं शब्दः'—इति क्षीरस्वामी । खेऽन्तरिक्षे शब्दं करोतीति वा । "शब्दो रोगिणो मीमांसा च ( ? )"—इति निगमः ॥

(३३) स्वनः । 'स्वन शब्दे (भ्व० प०)'; 'स्वनहसोर्वा (३,३,६२)'—इत्यप् । स्वन्यत इति स्वनः । "सिन्धोरूर्मेरिव स्वनः (ऋ० सं० ७,१,७,२)"—इति निगमः ॥

---

* निरु० ९,९ ।

(३४) ऋक्*। ऋच्यते (तु०प०) स्तूयतेऽनया। यद्वा; स्तूयते स्वयं देवतात्वात्। 'ऋच स्तुतौ (तु०प०)'—इत्यस्मात् सम्पदादित्वात् (३,३,९४वा०) क्विप्। "ऋचा वने मानृचः (ऋ०सं०८,५,२७,३)"—इति निगमः॥

(३५) होत्रा†। 'हु दानादानयोः (जु०प०)' 'हुयामाश्रुभसिभ्यस्त्रन्(उ०४,१६९)। हूयतेऽनया मन्त्ररूपया हविः, हूयतेऽस्यां प्राणः, हूयते वा प्राणः। तथाच—'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्'—इत्युपनिषत् (ऐ०)। यद्वा; होत्रेति यज्ञनाम (निघ० ३,१७), हूयतेऽस्मिन् हविरिति यज्ञस्य वागित्युच्यते तत्साध्यत्वात्। वाचं यच्छति वाग्वै यज्ञः'—इति ब्राह्मणम् (ऐ०ब्रा०५,४,५)। ऋतुयाजप्रैषेषु दशमे प्रैषे—"वनेम तद्धोत्रया चितन्त्या (ऋ०सं० २,१,१७,२)"—इति निगमः, "वीतिहोत्रं त्वा कवे (ऋ०सं०४, १,१९,३)"—इति च निगमः॥

(३६) गीः‡। गृणातिरर्चतिकर्मा (निघ०३,१४), औणादिकः क्विप्, 'ऋत इद्धातोः (७,१,१००)', 'र्वोरुपधाया दीर्घ इकः (८,२,७६)'—इति दीर्घः, हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (६,१,६८), रेफस्य विसर्जनीयः। गृणात्यनया गीः। "तमिद्वर्धन्तु नो गिरः (ऋ०सं०६,१,१०,३)"—इति निगमः॥

(३७) गाथा। 'गै शब्दे (भू०प०)', अर्चतिकर्मा च (निघ० ३,१४); 'उषिकुषिगार्त्तिभ्यस्थन् (उ०२,३)। गायतीत्यसौ देवताः, गायन्ति तामिति वा गाथा। "तं गाथया पुराण्या (ऋ०सं०७,४,

---

* निरु० १,८। † प० २,१७। ‡ निरु० १,१०, ६, २४. १०, ५।

२५,४)"—"युञ्जन्ति हरी इषिरस्य गाथया (ऋ०सं०६,७,२,३)"—इति निगमौ॥

(३८) गणः*। 'गण गणने' चुरादिरदन्तः (प०)। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। 'अतोलोपः (६,४,४८)। गण्यते या गणः, अतोलोपस्य स्थानिवद्भावात् वृद्धिर्न भवति। गणेति केचित् पठन्ति। निगमोऽन्वेषणीयः॥

(३९) धेना†। दधातेर्लटः शानचि व्यत्ययेन एत्वाभ्यासलोपौ दधाना स्वमभिधेयं वर्षप्रदानेन लौकिकाय वा। यद्वा; 'धेट् पाने (भू०प०)'; 'धेटइच्च (उ० ३,१०)'—इति न-प्रत्ययः इकारस्यान्तादेशः, गुणः, धयन्ति तामिति धेना। पानमत्र स्वीकारः। यद्वा; आस्वादः। धीयते पीयते आस्वाद्यते वानेन, धयन्ति प्राणमिति वा धेना। तथाच—'तं माता रेळ्हि स उ रेळ्हि मातरम्'—इति श्रुतिः (ऋ०सं०८,६,१६,४)। यद्वा; 'धिविः प्रीणनार्थः (भू०प०)' बाहुलकात् न-प्रत्ययो नकार-वकारयोर्लोपश्च, गुणः, धेना। प्रीणयति हि वाक् सुष्ठु प्रयुक्ता। 'धेना वाक् प्रीणनाद्धि वा'—इति माधवः। "धेना जिगाति दाशुषे (ऋ०सं०१,१,३,२)"—"जनानां धेना अवचाकशद्वृषा (ऋ०सं०७,८,२५,१)"—इति च निगमौ॥

(४०) ग्नाः‡। गमेर्धातोः (भू०प०) 'धापॄवस्यज्यतिभ्यो नः (उ०३,६)'—इति बाहुलकात् न-प्रत्ययो भवति टि-लोपश्च।

* निरु० ६, ३६। † निरु० ६, १७।
‡ निरु० ३, २१. १०, ४७. १२, ४६।

टाप् (४,१,४)। गत्यर्था बुध्यर्थाः। जानन्ति काममिति ग्नाः। यद्वा; गच्छति यज्ञेष्वभूत्। 'अभि यज्ञं गृणीहि नो ग्नावः (१,१, २८,३)' इत्यत्र 'छन्दांसि वै ग्नाः'—इति ब्राह्मणम्'—इति माधवः। * * *। तस्मात् छन्दसां गायत्र्यादीनां वाग्रूपत्वात् ग्ना-व्यपदेशः। निगमोऽन्वेषणीयः* ॥

(४१) विपा। 'विप् प्रेरणे (चु० प०)'। सम्पदादित्वात् (३,३, ९४वा०) क्विप्। तृतीयैकवचनम्। प्रेर्यते मनसा विपा। 'मनसा वा इषिता वाग्वदति (ऐ० ब्रा० २,१५)'—इति ब्राह्मणम्। "वरुणाय विपा गिरा (ऋ० सं० ४,४,६,१)"—इति निगमः। गिरेति पदं निरुक्त्या योजनीयम्॥

(४२) नग्ना। न गच्छति पितृकुलात् वाल्यात्, अनावरणापि न गच्छति लज्जामिति वा। 'नग्निकाऽनागतार्त्तवा'—इत्यमरः (२, ६,८)। नग्ना कन्या। ग्ना-शब्दः पूर्वमेव निरुक्तः, इह न-पूर्वः। नायं नञ्, किन्तु प्रतिषेधार्थोऽयं निपातः, अतो 'न लोपो नञः (६,३,७३)'—इति न भवति। * * *। "नना"—इति केचित्। नमते नै-प्रत्ययो बाहुलकान्मकारलोपश्च। नमयत्यनयेति नना। निगमोऽन्वेषणीयः॥

(४३) कशा†। 'काशृ दीप्तौ (भ्वा० आ०)'। अन्तर्णीतण्यर्थः। पचाद्यच् (३,१,१३४)। आकारस्य ह्रस्वत्वं छान्दसम्। प्रकाशय-त्यर्थान्। यद्वा; खेशया सती वर्णव्यत्ययादिना कशा; वाग्घि मुखात्

---

* एष एव निगमः—'ऊधर्न नग्ना जरन्ते (ऋ०सं० ५,७,१९,२)'—इति। 'अपि च नग्नाः, ग्नाः छन्दांसि'—इति तत्र सायणव्याख्या।

† निरु० ९,१९।

काशते तत उपलब्धेः। यद्वा; 'कश शब्दे (भू०प)'। अत्र शब्दायते कशा। यद्वा; 'कश गतौ (भू०प०)'; अच् (३,१,११४)। गच्छति गन्तव्यम्। "या वां कशा मधुमती (१,२,४,३)"—इति निगमः॥

(४४) धिषणा*। धारयत्यर्थमिति धीः बुद्धिः। धारयति कर्त्तारं फलप्रदानेनेति धीः कर्म्मबुद्धिः कर्म वा। सनोति सम्भजते इति सनोतेः (षणु त०उ०) पचाद्यचि (३,१,११४), पृषोदरादित्वात् (६,३,१०९) पूर्वपदह्रस्वत्वे च धिषणा। यद्वा; 'ञि धृषा प्रागल्भ्ये (स्वा०प०)'। 'धृषेर्धिष् च सञ्ज्ञायाम् (उ०२,८०)'—इति क्यु-प्रत्ययो धिषादेशश्च धिषणा। प्रगल्भसमर्था रक्षितुं जगद् वर्ष-प्रदानेनेत्यर्थः। यद्वा; 'दिधिषामि विश्वैः (ऋ०सं०२,७,२३,१२)' —इत्यत्र स्कन्दस्वामिना पठितात् 'धिषि धारणे'—इत्यस्मात् 'धिष शब्दे† (जु०प०)'—इति धातुपाठपठिताद्वा बाहुलकात् क्युप्रत्ययो धिषणा वाचि स्वाभिधेयं धारयति सम्बन्धस्य नित्यत्वात्। शब्दायते वा मेघे अधिश्रिता 'मिमाति मायुं धिषणावधि श्रिता (ऋ० सं० २,६,१९,३)'—इति श्रुतिः। "आपश्च मित्रं धिषणा च साधन् (ऋ०सं०१,७,३,१)"—इति निगमः।

(४५) नौः‡। 'नुद प्रेरणे (तु०उ०)'; 'ग्लानुदिभ्यां डौ (उ० २,६४)'—इति डौ-प्रत्ययः। नुद्यते प्रेर्यते मूलाधारादिस्थानेभ्यः प्राणेन। नमतेर्वा (भू०प०) बाहुलकात् (३,३,१) डौ, नम्यते वा देवतात्वात्। "सुतर्माणमधिनावं रुहेमेति यज्ञो वै सुतर्मा नौः

* निरु० ८, २। प० ३, ३०।

† 'अयं धारणार्थोऽपि'—इति सायणः (ऋ०सं०२,७,२५,२.)।

‡ निरु० ५, २३।

कृष्णाजिनं वै सुतर्मा नौ र्वाग्वै सुतर्मा नौः (ऐ०ब्रा० १,३,२)"—इति ब्राह्मणम्, "समितो नाव्याहितम् (ऋ०सं० ८,७,२३,४)"—इति च निगमौ ॥

(४६) अक्षरम्*। 'अशूङ् व्याप्तौ (स्वा०आ०)'; 'अश भोजने (क्र्या०प०)'। 'अशेः सरन्†, (उ० ३,६७)'—इति सरन्-प्रत्ययः, व्रश्चादिना (८,२,२६) षत्वम्, 'षढोः कः सि (८,२,४१)'। अश्नुते श्रोतुं स्वाभिधेयम्, व्याप्नोति वा अश्नाति वा हविः। अक्षेर्वा (रु०प०) बाहुलकात् सरन् नकार-लोपश्च। 'खरि च (८,४,५५)'—इति चर्त्वम्। अनक्ति म्रक्षयति सेचयति वर्षेण भूमिम्। यद्वा; नञ्-पूर्वात् क्षरतेः (भ्वा०प०) पचाद्यच् (३,१,१३४)। न क्षरति, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। 'वाग्वै समुद्रो न वै वाक् क्षीयते'—इति (ऐ०ब्रा० ५, ३,१) ब्राह्मणम्। "अक्षरेण प्रति मिम एताम् (ऋ०सं० ७,६,१३,३)"—इति निगमः। 'वाचा विरूपनित्यया'—इत्यर्थं माधवोऽवादीत्। "उपाक्षरा सहस्रिणी (ऋ०सं० ५,२,१८,४)"—इति च निगमः ॥

(४७) मही‡। व्युत्पादिता पृथिवीनामसु (१,१२)। मह्यते पूज्यतेऽनया देवता इति वा। "अमात्रं त्वा धिषणा तित्विषे मही (ऋ०सं० १,७,१५,२)"—इत्यत्र वाङ्नामत्वमपि युज्यते ॥

(४८) अदितिः§। व्युत्पादिता पृथिवीनामसु (१,१४)। अदीना, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। "अनागसो अदितये स्याम (ऋ०सं० १,२,१५,५)"—इति निगमः ॥

---

* प०१२। निरु०११,४१। † 'सरः'—इति मूलपाठः। ‡ निरु०११,९। § प० २,११. २,३०. ४,१. ५,५। निरु० ४,२२. ११,२२।

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 and 59, Ludgate Hill, London, E. C.**

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Chaitanya-chandrodaya, Nátaka, 3 fasci. | 1 | 14 |
| Srauta Sútra, A′s′valáyana, 11 fasci. | 6 | 14 |
| ——— Látyáyana, 9 fasci. | 5 | 10 |
| S′ankara Vijaya, 3 fasci. | 1 | 14 |
| Daśa-rúpa, 3 fasci. | 1 | 14 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | 1 | 4 |
| Sánkhya-sára, 1 fasci. | 0 | 10 |
| Lalita-vistara, 6 fasci. | 3 | 12 |
| Taittiríya Bráhmaṇa, 24 fasci. | 15 | 0 |
| Taittiríya Sañhitá, 31 fasci. | 19 | 6 |
| Taittiríya A′raṇyaka, 11 fasci. | 6 | 14 |
| Maitri Upanishad, 3 fasci. | 1 | 14 |
| A′s′valáyana Grihya Sútra, 4 fasci. | 2 | 3 |
| Mimáñsá Darsana, 14 fasci. | 8 | 12 |
| Táṇḍya Bráhmaṇa, 19 fasci. | 11 | 14 |
| Gopatha Bráhmaṇa, 2 fasci. | 1 | 10 |
| A′tharvana Upanishads, 5 fasci. | 3 | 2 |
| Agni Puráṇa, 14 fasci. | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. | 23 | 12 |
| Gopála Tápaní, 1 fasci. | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. | 1 | 14 |
| Chaturvarga Chintámani, 36 fasci. | 22 | 8 |
| Gobhilíya Grihya Sútra, 10 fasci. | 6 | 4 |
| Piñgala Chhandah Sútra, 3 fasci. | 1 | 14 |
| Taittiríya Prátis′ákhiya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. | 2 | 8 |
| Rájatarangini, | 4 | 0 |
| Mahábhárata, vols. III. and IV., | 40 | 0 |
| Puráṇa Sangraha, | 1 | 0 |
| Páli Grammar, 2 fasci. | 1 | 4 |
| Aitareya A′raṇyaka of the Rig Veda, 5 fasci. | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. | 2 | 8 |
| Brahma Sútra, English, | 1 | 0 |
| Kátantra, 6 fasci. | 6 | 0 |
| Kámandakiya Nítisára, 4 fasci. (Fasci. 1, out of stock.) | 2 | 8 |
| Bhámatí, 8 fasci. | 5 | 0 |
| Aphorisms of Sandalya, English, Fasci. 1., | 0 | 10 |
| Vayu Puráṇa, 6 fasci. | 3 | 12 |
| Kathá Sarit Ságara, English Translation, 5 Fasci. | 5 | 0 |

## *Arabic & Persian Series.*

| | Rs. | |
|---|---|---|
| Dictionary of Arabic Technical Terms, 20 fasci., complete, | 25 | 0 |
| Risálah-i-Shamsiyah, (Appendix to Do. Do.), | 1 | 4 |
| Fihrist Ṭúsí, 4 fasci. | 3 | 0 |
| Nukhbat-ul-Fikr, | 0 | 10 |
| Futúh-ul-Shám, Wáqidí, 9 fasci. | 5 | 10 |
| Futúh-ul-Shám, Azadí, 4 fasci. | 2 | 8 |
| Maghází of Wáqidí, 5 fasci. | 3 | 2 |
| Isábah, 28 fasci., with supplement, | 20 | 14 |
| Táríkh-i-Fírúz Sháhí, 7 fasci. | 4 | 6 |
| Táríkh-i-Baihaqí, complete in 9 fasci. | 5 | 10 |
| Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. | 9 | 6 |
| Wís o Rámín, 5 fasci. | 2 | 3 |
| Iqbálnámah-i-Jahángírí, complete in 3 fasci. | 1 | 14 |
| 'Álamgírnámah, 13 fasci., with index, | 8 | 2 |
| Pádsháhnámah, 19 fasci., with index, | 11 | 14 |
| Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, | 12 | 12 |
| Áín-i-Akbarí, Persian text, 4to., 22 fasci. | 27 | 8 |
| Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, | 12 | 4 |
| Farhang-i-Rashídí, 14 fasci., complete, | 17 | 8 |
| Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, | 2 | 0 |
| Akbarnámah, 17 fasci. with Index, | 20 | 0 |
| Maáṣir-i-'Álamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, | 3 | 12 |
| Haft Ásmán, history of the Persian Maṣnawí, | 1 | 4 |
| Ṭabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. | 10 | 0 |
| Ṭabaqát-i-Náçirí, Persian text, 5 fasci. | 3 | 2 |
| History of the Caliphs, 3 fasci. | 3 | 0 |

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XX, 1850-51, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI, XXVII, 1857-58, and vols. XXXIII to XLVII, 1864-78, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

| | Rs. | |
|---|---|---|
| Asiatic Researches, vols. VII. to XI. and vols. XVII. to XX. each, | 10 | 0 |
| Do. Do. Index, | 5 | 0 |
| Catalogue of Fossil Vertebrata, | 2 | 0 |
| ——— of Arabic and Persian Manuscripts, | 1 | 0 |
| Tibetan Dictionary, | 10 | 0 |
| ——— Grammar, | 8 | 0 |
| Notices of Sanskrit Manuscripts, 14 fasci. | 14 | 0 |
| Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. | 1 | 0 |
| Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. | 2 | 0 |
| Aborigines of India, by B. H. Hodgson, | 3 | 0 |
| Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, | 2 | 0 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, | 1 | 8 |
| 'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., | 16 | 0 |
| Analysis of the Sher Chín, by Alexander Csoma de Körös, | 1 | 0 |
| Khazánat-ul-'ilm, | 4 | 0 |
| Sharáyat-ul-Islám, | 4 | 0 |
| Anís-ul-Musharrihín, | 3 | 0 |
| Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar, | 2 | 0 |
| Moore and Hewitson's Descriptions of New Indian Lepidoptera, Part I, with 3 Plates, | 6 | 0 |

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 454.

# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PANDIT SATYAVRATA SÁMAS'RAMÌ.

VOL. I.

FASCICULUS II.

---

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1881.

(४९) शची*। अत्र क्षीरस्वामी—'शच श्वच गतौ'। शचतीति तु धातुपाठे गत्यर्थो न दृष्टः। 'शच व्यक्तायां वाचि (भू० आ०)'; 'इन् सर्वधातुभ्यः (उ० ४पा० ११४)। 'कृदिकारात् (४,१,४५वा०)' —इति ङीष्। शचते गच्छति यज्ञम्, शच्यते गम्यते ज्ञायतेऽनयाऽर्थः, शचते व्यक्तां वाचं करोतीति वा। "शचीर्मदन्त उत दक्षिणाभिर्नैर्जिह्मायन्त्यो नरकं पताम (निरु० १,११)"—इति निगमः॥

(५०) वाक्†। निरुक्ता पूर्वमेव (पृ० ७५)। "यद्वाग् वदन्त्यविचेतनानि (ऋ० सं० ६,७,५,४)"—इति निगमः॥

(५१) अनुष्टुप्‡। स्तोभतिर्वृद्ध्यर्थः (भू० आ०)। क्विप्। अनुपूर्वेण क्रमेण, पूर्वमकारात्मना ततः स्पर्शादिभिर्व्यज्यमाना वर्द्धते। तथाचोपनिषत्—'अकारो वै सर्वा वाक् सैव स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा 'परा' 'पश्यन्ती' 'मध्यमा' 'वैखरी' इति। तथाच 'विरूपं वक्ति वाक् तावकं वपुः'—इति संवित्प्रकाशे वामनदत्तः। 'ध्वनिः वर्णः पदं वाक्यमित्याहुः पदचतुष्टयम्। यस्याः सूक्ष्मादिरूपेण वाग्देवीं ता सुपास्महे'—इति श्रीभोजदेवः§। अतिस्तुतिषु चत्वारि वाक्-परिमितानि पदानि (निरु० १३,९)'—इत्यत्र निरुक्त्या एव वा वृद्धिः प्रतिपादिता। यद्वा; पूर्वं पञ्चाशदक्षरात्मना ततो गद्यपद्यादिरूपेण वर्द्धते। तथाहि—'परिमिता वर्णा अपरिमितां वाचोगति माप्नुवन्ति'—इति भगवानाश्वलायनः। यद्वा; स्तोभति स्तौति-

* प० २, १. ३, ९। निरु० १, ११. १२, २०।
† प० ५, ५। निरु० २, २३. ८, २१. ११, २०।
‡ निरु० ७, १२।
§ भोजराजीय-व्याकरणस्य मङ्गलाचरणमिदम्।

कर्मा (निघ० ३,१४)। आनुपूर्व्येण स्तौति देवताः। "अनुष्टुभमनु च चर्यमाणमिन्द्रम् (ऋ० सं० ८,७,१०,४)"—इति निगमः॥

(५२) धेनुः*। 'धेट् पाने (भ्वा० प०)'। 'धेट इच्च (उ० ३,३३)'—इति नु-प्रत्ययः, इकारोऽन्तादेशः। धयति तामिति धेनुः, पीयते हि वा तत्प्रवृत्तवृष्टिद्वारेण, धेनुवद्दोग्ध्री सर्वकामान् इति वा। 'अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् (ऋ० सं० ८,२,२३,५)'—इति श्रुतिः। "गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः'—इति दण्डी। तथाचागमः—'एक शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति (शि० भा०)'—इति। "अभि सप्त धेनवः (ऋ० सं० ७,३,१६,५)"—"नेष्टुः सचन्त धेनवः (ऋ० सं० २,५,२६,५)"—इति च निगमौ॥

(५३) वल्गुः। 'वल संवरणे (भ्वा० आ०)'। 'वलेगुक् च (उ० १,१८)'—इत्यु-प्रत्ययः। संवृणोत्याच्छादयति जगत् व्याप्नोतीति यावत्। यद्वा; वल्गतिः शब्दार्थः (भ्वा० प०), बाहुलकादु-प्रत्ययः। गर्जितादिलक्षणं शब्दं करोति वल्गुः। "अयं नाभा वदति वल्गु वो गृहे (ऋ० सं० ८,२,१,४)"—इति निगमः॥

(५४) गल्दा†। 'गल अदने' भौवादिः (प०)। गल्लनं पूरणं कामानां, गलः पूरणार्थः स्कन्दस्वामिनोक्तः, तद्ददाति। 'आतोऽनुपसर्गे कः (३,२,३), गल्दा। निगमोऽन्वेषणीयः॥

(५५) सरः‡। 'सृ गतौ (भ्वा० प०)'; असुन् प्रत्ययः (उ० ४,

---

* प० ५, ५। निरु० ११, ४२।

† प० ४, ३। निरु० ६, २४।

‡ प० १२। निरु० ५, ११. ९, २६।

१८४)। गत्यर्थाः बुद्ध्यर्थाः। सरति जानाति सर्वं देवतात्वात्, ज्ञायते वा विद्वद्भिः, सरति गच्छत्येव वाङ्गता। "सरो न पर्णम् अभिनो वदन्तः (ऋ० सं० ५,७,४,२)"—इति निगमाः। अत्र प्रकरणात् स्तोत्रशस्त्रात्मिका वागुच्यते एवं माधव ऐच्छत्॥

(५६) सुपर्णी*। सुपर्णशब्दो रश्मिनामसु व्याख्यातः (१,५)। 'पाककर्णपर्णपुष्पफलमूल (४,१,६४)'—इत्यादिना ङीप्। निगमोऽन्वेषणीयः॥

(५७) बेकुरा†। 'भा दीप्तौ (अदा० प०)'; कान्तिं करोतीति किञ्चित् विगृह्य करोते रौणादिके क-प्रत्यये कृते 'उदोष्ठ्यपूर्वस्य (७,१,१०२)'-'बहुलं छन्दसि (७,१,१०३)'—इति ऋकारस्यानोष्ठ्य-पूर्वस्यापि उकारो मकारस्य बकारेण आकारस्य एकारेण च व्युत्पत्तिश्छान्दसत्वात् बेकुरा दीप्तिकारिणी प्रयोक्तुः। "बेकुरानामासि जुष्टा (ता० म० ब्रा० १,१,३)"—इति निगमः। छन्दोगानां सामकल्पे‡ पठितोऽयं मन्त्रः। 'वचे र्व्याप्तिकर्मणः बेकुरा'—इति भरतस्वामि-भाष्यम्॥

इति सप्तपञ्चाशत् वाङ्नामानि॥ ११॥

---

* पृ० ५। निरु० ७, ३१।

† निरु० ६, २६।

‡ ताण्ड्यमहाब्राह्मणस्याद्याध्यायचयं सामकल्प उच्यते।

अर्णः[१]। क्षोदः[२]। क्षद्म[३]। नभः[४]। अम्भः[५]। कबन्धम्[६]। सलिलम्[७]। वाः[८]। वनम्[९]। घृतम्[१०]। मधु[११]। पुरीषम्[१२]। पिप्पलम्[१३]। क्षीरम्[१४]। विषम्[१५]। रेतः[१६]। कशः[१७]। जन्म[१८]। वृबूकम्[१९]। बुसम्[२०]। तुग्र्या[२१]। बुर्बुरम्[२२]। सुक्षेम[२३]। धरुणम्[२४]। सिरा[२५]। अररिन्दानि[२६]। ध्वस्मन्वत्[२७]। जामि[२८]। आयुधानि[२९]। क्षपः[३०]। अहिः[३१]। अक्षरम्[३२]। स्रोतः[३३]। तृप्तिः[३४]। रसः[३५]। उदकम्[३६]। पयः[३७]। सरः[३८]। भेषजम्[३९]। सहः[४०]। शवः[४१]। यहः[४२]। ओजः[४३]। सुखम्[४४]। क्षत्रम्[४५]। आवयाः[४६]। शुभम्[४७]। यादुः[४८]। भूतम्[४९]। भुवनम्[५०]। भविष्यत्[५१]। महत्[५२]। आपः[५३]। व्योम[५४]। यशः[५५]।

---

(२) "क्षद्मा" ख। "क्षद्मः" ग। "क्षम्न" च।

(६) "कबन्धम्" क-ङ-भिन्नेषु सर्वत्रैव, मुद्रिते ऋग्वेदसंहितापुस्तके चैकत्र (४, २, १५, ३) दृश्यते ; परं टीकाकृन्मतविरुद्धः।

(१७) "ग्रकम्" C. D. F।

(१८) "ब्रह्म" C.। "जह्म" ग. D. F।

(२२) "बुर्बुरम्"—इतिपाठः टीकाकृत्सम्मतः। "बुबुरः"—इति ग. C. D. F पुस्तकेषु; एभ्योऽन्यत्र सर्वत्रैव "बर्दुरम्"—इति।

(२३) "सुक्षेमा" ख। "सुक्षेम"—इत्यपि टीकाकृत्सम्मतः।

(२५) "सुरा" च. ङ. टीकाकृत्सम्मतस्याप्राधान्येन। "सुरा" ख. F। "ह[illegible]रा. ग।

(२६) "अररिदानि" ख. ग।

(२८) "जामिः ख. ग. D F। "जामिवत्"—इत्यपि टीकाकृत्सम्मतः।

(३२) "अक्षराः" ग। "अक्षरः" C. D. F।

(३७) "पयः"—इत्येव कातिरिक्तेषु सर्वत्र, परं टीकाविरुद्धः। पु० ७।

(४७) "यादः" ग. C. D. F।

(५२), (५३) एवमेवानपूर्वी पाठः, टीकाकृतः सम्मतः, ग-पुस्तके च।

मर्हः(५६) । सर्णीकम्(५७) । स्वृतीकम्(५८) । सतीनम्(५९) । गहनम्(६०) । गभीरम्(६१) । गम्भरम्(६२) । ईम्(६३) । अन्नम्(६४) । हविः(६५) । सद्म(६६) । सदनम्(६७) । ऋतम्(६८) । योनिः(६९) । ऋतस्य योनिः(७०) । सत्यम्(७१) । नीरम्(७२) । रयिः(७३) । सत्(७४) । पूर्णम्(७५) । सर्वम्(७६) । अक्षितम्(७७) । बर्हिः(७८) । नाम(७९) । सर्पिः(८०) । अपः(८१) । पवित्रम्(८२) । अमृतम्(८३) । इन्दुः(८४) । हेम(८५) । स्वः(८६) । सर्गाः(८७) । शम्बरम्(८८) । अभ्वम्(८९) । वपुः(९०) । अम्बु(९१) । तोयम्(९२) । तूयम्(९३) । कृपीटम्(९४) । शुक्रम्(९५) । तेजः(९६) । स्वधा(९७) । वारि(९८) । जलम्(९९) । जलाषम्(१००) । इदम्(१०१) । इत्येकशतमुदकनामानि* ॥ १२ ॥

---

(५७) "स्वर्णीकम्" क-च-C-D-F पुस्तकेभ्योऽन्यत्रैवमेव पाठः, परं टीकाविरोधादुपेक्ष्यः।

५८) "सतीकम्"—इत्यपि टीकाकृत्सम्मतः। ग. C. D. F पुस्तकेषु तु "स्वृतीकम्"—इत्यस्य पुरस्तात् "सृतीकम्"—इति, परस्ताच्च "सतीकम्"—इति द्वे पदेऽधिके दृश्यते।

(५९) "सतिनम्" ख।

(६२) "गृङ्करम्" ग. C. D. F। निरु० १४, ११।

(६३) इतोऽनन्तरं "कम्"—इत्यधिकम् ग. C. D. F। प० ३, ९। निरु० १, ९; १४. ४, १८. ६, २५।

(७५) "पूर्णम्"—इति ख।

(८५) "हेमा" ख।

(९०) "अम्बुः" C. D।

(९३) इदं न दृश्यते ग. C. D. F पुस्तकेषु।

(९४) "द्वपीटम्" ग. F। "त्वपीटम्" C. D।

(९५) "शुक्तम्" च (भ्रमात्)।

(९७) इतोऽनन्तरम् "अक्षरम्"—इत्येतदधिकं ग. C. D. F पुस्तकेषु।

* [illegible]युदकस्य" ग०।

'उदकनामान्युत्तराण्येकशतम् (निरु० २,२४)'—

(१) अर्णः*। 'ऋ गतौ (भ्वा०प०)'। 'उदके नुट् च (उ०४, १९२)'—इति अर्त्तेरसुन् प्रत्ययः। अर्यते तत् प्राणिभिरित्यर्थः। ऋच्छति निम्नं प्रदेशमिति वा अकारान्तोऽप्यस्ति†। 'ऋ गतौ (क्र्या० प०)', पचाद्यच् (३,१,१३४)। ऋणाति गच्छति दिवो भूमिं वृषमाणम्। "सृजदर्णांस्यव यद्युधा (ऋ०सं०२,४,१६,४)"— "अग्ने दिवो अर्णमच्छा जिगासि (ऋ०सं०३,१,२२,३)"—इति निगमौ॥

(२) क्षोदः। 'क्षुदिर् सम्प्रेषणे' भौवादिः स्वरितेत्। असुन् (उ०४,१८४)। क्षुद्यते क्षोदः। क्षुण्णं हि जलं पर्वतादिभ्यः शिला-दिष्वधःपतनात्। "नावा न क्षोदः प्रदिशः पृथिव्याः (ऋ०सं० ८,१,१८,७)"—"याभी रसां क्षोदसोद्नः पिपिन्वथुः (ऋ०सं० १,७,३५,१२)"—इति च निगमौ॥

(३) क्षद्म‡। 'क्षद स्थैर्ये (सौ०)'—इति स्कन्दस्वामी। 'क्षद गति-हिंसनयोः (सौ०)'—इति सुबोधिनीकारः। 'अन्येभ्योऽपि दृश्यते (३,२,७५)'—इति मनिन्। क्षदीति पिपासादनिवर्त्तने। स्वकार्यै स्थिरं भवति जलाशयं व्याप्य स्थिरं भवतीति वा। तथाच 'स्थाव-राद् गृह्णामि'—इति श्रुतिः, गतावर्णसोरसमित्यर्थः। हिनस्ति पिपासा मुष्णं वा अतीप्सितं वा पुरुषम्। "क्षद्मेवाग्येषु तर्त्तरीथ उग्रा (ऋ०सं०८,६,२,२)"—इति निगमः॥

* प० १७. २, १४। † निरु० ११, २०। ‡ प० २, ७।

(४) नभः* । 'नह बन्धने (दि० उ०)'; 'नहेर्दिवि भश्च (उ० ४,२०५)'—इति विधीयमानोऽसुन् भकारादेशश्च बाहुलकादुदकेऽपि भवतः । नह्यते हि तन्मेघैर्दिवि भूमौ सेचादिभिः, नह्यति प्राणिनां मनांसीति वा । प्राणिनो हि यत्रोदकं विद्यते तत्रैव स्थातुं मनः कुर्वते । तथा—'स-मनसः खलु वै पशवोऽनावृतास्ते पशवो हि स-मनसः'—इति श्रुतिः । न न भातीति वा; एकस्य नञो लोपः इतरस्य न-लोपाभावः । भातेरसुनि टिलोपश्च बाहुलकात् । भात्येव स्वया दीप्त्या देवतात्वात् । यद्वा; नभ इव नभः । तथाम्बर-निर्वचने 'अम्बुवद्भाजते'-इत्यादिना ग्रन्थेन (२५पृ०) आकाशस्य जलसाम्य मुक्तम्, साम्यस्योभयनिष्ठत्वात् अत्र जलमप्याकाशसदृश-मित्युच्यते । "मदच्युतमौशानं नभोजाम् (ऋ० सं० ७,७,२५,४)" —"नभोवसानः परियास्यध्वरम् (ऋ० सं० ७,३,८,५)"—इति च निगमौ ॥

(५) अम्भः† । 'आप्लृ व्याप्तौ (स्वा० प०)' । उदके नुम्भौ च (उ० ४,२०४), अत्रापो ह्रस्वोऽसुन्निति (उ० ४,२०२) च वर्त्तते । व्याप्नोति सर्वमम्भः । तथाचाथर्वणी श्रुतिः—'सर्वमिदमम्भः (अथ० ब्रा० ? )'—इति, 'आपो वा इदं सर्वम् (अथ० सं० ? )'—इत्यादिरनुवाकस्य । "अम्भः किमासीद् गहनं गभीरम् (ऋ० सं० ८,७,[illegible]वे१)"—इति निगमः ॥

[illegible] कबन्धम्‡ । बन्धिरनिभृतत्वे (निरु० १०,४), निभृतं चञ्चल

* पु० ४ । प० ३, ३० । निरु० २, १४ । † प० ३, ३० ।
‡ निरु० १०, ४ ।

मतोऽन्यदनिभृत मचञ्चलम् तदनिभृतं, कवन्धः कमनीयञ्च तद्बन्धं चेत्यर्थः । कसेर्डप्रत्यये कः, बन्धेः पचाद्यचि बन्धः इति निर्वाहः। यद्वा; कं सुखं बध्नाति स्नानपानादिना। कर्मण्यण्। बवयोरविशेषात् वकारः; कवन्धम्। "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४,४, ३०,२)"—"अर्यमणो न मरुतः कवन्धिनः* (ऋ० सं० ४,३,१५, ३)"—इति च निगमौ ॥

(७) सलिलम्† । 'सल गतौ (भ्रू० प०)'। 'सलिकल्यनिमहि-भड़िभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (उ० १,५४) । सलति गच्छति निम्नं देशं, गम्यते प्राणिभिरिति वा । "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २,३,२२,१)"—इति निगमः ॥

(८) वाः‡। 'वृञ् वरणे (स्वा० उ०)'। स्वार्थिकोऽण् छान्दसः, तदन्तात् क्विप्, अणि लोपः, हल्ङ्यादिलोपः, रेफस्य विसर्जनीयः । वृतं हि तदिन्द्रेण। तथाच श्रुतिः—'अपकामं स्यन्दमाना अवीवरत वाह्निकम्'—इति । इन्द्रो दिवः शक्तिभिर्दिवः तस्मादर्णमवो हितमिति। "वार्ण पथ्या रथ्येव स्वानीत् (ऋ० सं० २,५,२५,१)"—इति निगमः॥

(९) वनम्§ । 'वन षण सम्भक्तौ (त० आ०)' । 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'। वन्यते सेव्यते वनम् । "यथा वातो यथा वनम् (ऋ० सं० ४,४,२७,४)"—"सोमो विश्वान्यतसा वनानि (ऋ० सं० ८,४,१४,५)"—इति च निगमौ ॥ ५ उर

* मूलर-प्रकाशिते सभाष्यर्ग्वेदसंहितापुस्तके तु 'कबन्धिनः'—इति पाठः स्थितः; परमनुपदोक्त-'बवयोरविशेषाद् बकारः'—इत्युक्त्या देवराजमते ... शुद्धः।

† प० ३, १।

‡ प० ५, १२. ९, २।

§ पु० ५।

(१०) घृतम्*। 'घृ घृ सेचने (भू०प०)। 'अञ्जिघृसिभ्यः क्तः (उ० ३,८६)'—इति क्त-प्रत्ययः। सेचयत्यनेन भूमिं वरुणः, सिञ्चत्यनेनेति वा। 'कृष्णं नियानं हरयः सुपर्णाः (ऋ०सं० १,२२,८,४७)'—इत्यत्र 'घृतमित्युदक नाम (निघ० १,१२) जिघर्त्तेः सिञ्चति-कर्मणः (निरु० ७,२४)'—इति भाष्यम्। यद्वा; 'घृ क्षरण-दीप्त्योः (जु०प०)'। गत्यर्थाकर्मकेत्यादिनाऽकर्मकत्वात् कर्त्तरि क्तः (३,४,७२)। जिघर्त्ति क्षरति मेघात् पर्वतादिभ्यो वा, दीप्यते वा स्वया दीप्त्या। "आदिद्घृतेन पृथिवी व्युद्यते (ऋ०सं० २,३,२३,१)"—इति निगमः॥

(११) मधु†। मेघोदरवर्त्ति सलिलं मध्वित्युच्यते। तत्र पुनर्वैद्युतात्मना दह्यमानं सरः स्वर्णेन तद्गतेनैव वायुना ध्मायमानं धमति (भू०प०)। धमतिर्गतिकर्मा (निघ० २,१४) वा अन्तर्णीत-ण्यर्थो निःकालने द्रष्टव्यः निर्धाम्यते निःकल्यते हि तन्मेघात्। यद्वा; 'मद तृप्तौ (दि०प०)'। अस्माद्बाहुलकादु-प्रत्ययो धान्तादेशश्च। माद्यन्ति हि तेन पीतेन प्राणिनः। यद्वा; मधुवत्स्वादुत्वात् मध्वित्युच्यते। इमानि स्कन्दस्वामि-निर्वचनानि। वैयाकरणपक्षे तु 'मन-ज्ञाने (दि० आ०)'—इति, अस्मात् निदिति (उ० १,९) वर्त्तमाने 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च (उ० १,१८)'—इत्यु-[illegible]वो धोऽन्तादेशश्च। मन्यते अतिशयेन जनैः इति मधु। 'मन[illegible]येन मधु'—इति भट्टभास्करमिश्रः। "विद्वान् मध्व उज्जभारा दृशे [illegible] (ऋ०सं० ७,५,२३,५)"—इति निगमः॥

---

* [illegible]० १, १. ७, २४. १०, १६। † निरु० २, १. ४, ८. ८, ६. १०, ११।

(१२) पुरीषम्*। 'पॄ पालनपूरणयोः (जु०प०)'। 'शॄपॄभ्यां किच्च (उ० ४, २७)'—इति ईषन्-प्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उद्रपरत्वम्। पूरयति जगत् प्रलयकाले, पूर्यतेऽनेन तड़ाकादि, पालकं वा जगतः शस्योत्पत्ति-हेतुत्वात्। प्रीणातेर्वा (क्र्या० उ०) बाहुलकात् कीषन्-प्रत्ययः, ईकारस्योकारादेशः स च पकारात् परो द्रष्टव्यः। प्रीणाति जगत् पुरीषम्। "उद्यन्तमुद्रा-दुत वा पुरीषात् (ऋ० सं० २, ३, ११, १)"—इति निगमः॥

(१३) पिप्पलम्। 'पॄ पालनपुरणयोः (जु० प०)'। 'कल पॄट-पादिभ्यः ( ? † )'—इति कल-प्रत्यये 'उदोष्ठ्य पूर्वस्य (७, १, १०२)' —इति 'बहुलञ्छन्दसि (७, १, १०३)'—इति बहुलवचनात् उत्वा-भावे, बाहुलकत्वात् द्वित्वे, अभ्यासस्य उरदत्वे, 'अर्त्तिपिपर्त्योश्च (७, ४, ७७)' 'बहुलञ्छन्दसि (३, ४, ७८)'—इतीत्वे, उत्तरस्य पकारस्य द्वित्वमृकारलोपश्चापि। पिपर्त्ति पिप्पलम्। पुरीषेण समा-नार्थम्। 'अपि प्लवते'—इति नैरुक्ताः'—इति चीरस्वामी। प्लवतेऽपि। 'प्लुङ् गतौ (भ्वा० आ०)'। गच्छत्यपि। अपिशब्दात् तिष्ठतीति च गम्यते। तथाहि—जलं नदीषु प्रवाहवत्वात् गच्छति निम्नं प्रदेशं वा। 'जलाशयादिषु तीरादिनिरुद्धत्वान्न क्वचिद् गच्छ[illegible]ति'—इति माधवः। अपिवा प्लवतेर्गत्यर्थाद् ऊर्णोतेर्ड-प्रत्ययो बाहुलक[illegible]र्वति, टिलोपाभावो बाहुलकादेव। पकारस्य द्वित्वमकारोपजन[illegible] 'वष्टि भागुरिरल्लोप मवाप्योरुपसर्गयोः (२, ४, ८२ भा०)'—इत[illegible]ब्द-[illegible]

* निरु० १, २२।

† कौमुद्यान्तु 'कलस्तृपश्च (उ० १, १०१)'—इति पाठः। तदातु 'वृष[illegible]यश्चित् (उ० १, १०२)'—इति कल-प्रत्ययेन भाव्यम्।

स्याकारलोपः, पिप्पलम्; पृषोदरादिः। "तस्येदाङ्गः पिप्पलं स्वाद्वग्रे (ऋ० सं० २,३,१८,२)"—इति निगमः॥

(१४) चीरम्*। 'घस्लृ अदने (भू० आ०)'। 'घसेश्चिच्च (उ० ४,३३)'—इति ईरन् प्रत्ययः, चकारात् किच्चेति अनुवर्त्तते,† कित्त्वात् 'गमहनजन (६,४,९८)'—इत्युपधालोपः, 'खरि च (८,४,५५)'—इति चर्त्वं घकारस्य ककारः, 'शासिवसिघसीनाञ्च (८,३,६०)'—इति षत्वम्। अदन्ति तदिति चीरम्। 'चर सञ्चलने (भू० प०)'—इत्यस्माद् बाहुलकात् डीरन्-प्रत्ययः टि-लोपश्च। चरति हि तत् मेघात्। "चीरेण स्नातः कुथवस्य योषे (ऋ० सं० १,७,१८,३)"—इति निगमः॥

(१५) विषम्‡। 'विष्लृ व्याप्तौ (जु० उ०)'। 'विषेर्व्याप्तिकर्मणि (?)'—इति क-प्रत्ययः। वेवेष्टि व्याप्नोति सर्वं विषम्। यद्वा; विपूर्वात् 'ष्णा शौचे (अदा० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३,२,१०,१)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकात् भवति, णकारलोपोऽपि बाहुलकादेव। विशेषेण स्नात्यनेनेति विषम्, तद्धि प्रथमं शौचसाधनम्। विपूर्वात् सचतेर्वा पूर्ववत् ड-प्रत्ययः। तद्धि स्नात्य[illegible]लावगाहनार्थिभिः सेव्यते। "जातं विश्वाचो अहतं विषेण (ऋ[illegible]तु १,८,१६,१)"—"केश्य१ग्निं केशी विषम् (ऋ० सं० ८,७,२[illegible]वे"—इति च निगमौ॥

* निघ० १,५।
† 'घसेः किच्च'—इत्येव पाठो दृश्यते कौमुद्याम्।
‡ निघ० ११, ४२. १२, २६।

(१६) रेतः। 'रि रीङ् स्रवणे' दैवादिकः (आ०)। 'स्रुरिभ्यां तुट् च (उ० ४,१९७)'—इत्यसुन्-प्रत्ययो तुडागमश्च गुणः। रीयते स्रवति रेतः। यद्वा; वृष्टिलक्षणानामपां देवानां रेतस्त्वाद्रेत उच्यते तथाचोपनिषत्—'देवानां रेतो वर्षम्'—इति। "अस्मे रेतः सिञ्चत यन्मनु र्हितम् (ऋ० सं० ५,१,१४,२)"—"सप्तार्द्धगर्भा भुवनस्य रेतः (ऋ० सं० २,३,२१,१)"—इति निगमौ॥

(१७) कशः। 'कश गतौ (भू० प०)', 'कश शब्दे (भू० प०)'। उभयोरसुन् (उ० ४,१८४)। कशति गच्छति निम्नं प्रदेशम्, मेघेभ्यः पतत् शब्दं करोतीति वा कशः। "याभिर्महामतिथिग्वं कशो जुवम् (ऋ० सं० १,७,३५,४)"—इति निगमः॥

(१८) जन्म*। 'जनी प्रादुर्भावे (दि० आ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति मनिन्, औणादिको वा (उ० ४, १४०)। जायते सृष्टिकाले स्वकारणात्। 'अग्नेरापः (तै० उ०)'—इत्युपनिषत्। जायन्ते वास्मिन् जलचारिणो मत्स्यादयः। निगमो-ऽन्वेषणीयः॥

(१९) वृबूकम्†। ब्रवीतेः शब्दार्थात् (अदा० उ०), भ्रंशतेर्वाधः-पतनार्थात् (भू० आ०); उभाभ्यां समुदिताभ्यां वा 'उलूकृत'—इ[illegible] (उ० ४,४०)'—इति ऊक-प्रत्यये निपातनाद्रूपसिद्धिः। 'ऊ[illegible]यतेर्भ[illegible]यये धातुद्वयस्य वृबूभावः'—इति औ[illegible]ासः। क्रमेणार्थः—तद्धि[illegible] 'वत् साध्याकारं शब्दं करोति, भ्रश्यति दिवोऽनावरणत्वात्; [illegible]ग्धो [illegible]ग्रमध्य- [illegible]शुद्धः

* निरु० ११, २२. १२, २२। † निरु० २, २२।

भ्रश्यति भ्रन्दवचेति "द्वा इवूकं वहतः पुरीषम् (ऋ० मं० ७,७, १८,३)"—इति निगमः ॥

(२०) बुसम्* । विपूर्वात् स्नातेः (अदा० प०) 'आतश्चोपसर्गे (३,३,१०६)'—इति क-प्रत्यये उपसर्गेकारस्योकारो बाहुलकाद् भवति, धातोर्नकारलोपोऽपि बाहुलकादेव । विशेषेण स्नात्यनेनेति बुसम्† । तद्धि प्रथमं शौचसाधनम् । भ्रंशतेर्वा पचाद्यचि (३,१, १३४), पृषोदरादित्वादूहनीयं रूपम् । पूर्ववदर्थः । यद्वा; 'बुस उत्सर्गे (दि० प०)' । 'गेहे कः (३,१,१४४)'—इति बाहुलकाद-स्मादपि भवति । बुस्यते उत्सृज्यते मेघैरिति बुसम् । "आविः स्वः कृणुते गूहते बुसम् (ऋ० मं० ७,७,१८,४)"—इति निगमः ॥

(२१) तुग्र्या । तुजतिर्हिंसायाम् (भू० प०) । 'क्विप् च (३, २,७६)'—इति क्विप् । तुजन्ति हिंसन्ति तम औष्ण्येन जनानिति वा तुजो रश्मयः । तद्वान् तुग्र्यः । रोमत्वर्थीयोऽतिशायने । तुग्र आदित्यः, तत्र भवा तुग्र्या । 'भवे छन्दसि (४,४,११०)'— इति यत् । 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'—इति मनुः (३ अ० ७६ श्लो०) । यद्वा; तुग्रशब्देन ग्रीष्म उच्यते, अतिशयेना-दित्य[illegible]किरणवान् हि ग्रीष्मकालः । 'तत्र साधुः (४,४,९८)'—इति [illegible] तुग्र्या । 'अग्न्याकाशयज्ञवरिष्ठेषु तुग्रशब्दः'—इति वृत्तिकारः । [illegible]वे इत्यर्थे 'तुग्राद् घन्(४,४,११५)'—इति घन्-प्रत्यये प्राप्ते [illegible]न 'भवे छन्दसि (४,४,११०)'—इति यत् । 'तुग्र्या आपः'— 'तु[illegible]दकम्' उभयमपि दृश्यते । 'अग्नेरापः (तै० उ०)'—इत्यपां

* नि० ५, १९ । † बवयोरविशेषसूक्तमेव पुरस्तात् (१०० पृ०) ।

कारणत्वेन अग्नेः श्रुतत्वात्, अग्ने र्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः (सु० उ० २,५)—इति क्रमेण वा आकाशे वृष्टि-लक्षणेनापां विद्यमानत्वात्, यज्ञस्यापि 'अग्नौ प्रास्ताहुतिः सम्यगा-दित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः'—इति (मनुः ३ अ० ७६ श्लो०) पारम्पर्येण वृष्टिहेतुत्वात्। सर्वैश्वर्यवत्तया वरिष्ठ इन्द्रो विवक्षितः, वृष्टिप्रदानाच्च; तस्मात् तत्र भव इत्येषोऽर्थः सर्वत्र यथाकथञ्चित् वक्तुं शक्यते। "आवः शर्म वृषभं तुग्र्यासु (ऋ० सं० १,२,३,५)"—"उत यस्तुग्र्ये सचा (ऋ० सं० ६,२,४,५)"—इति च निगमौ॥

(२२) बुर्बुरम्। 'पॄ पालनपूरणयोः (जु० प०)'। 'गेहे कः (... ,१४४)'—इति बाहुलकात् कः। 'उदोष्ठ्यपूर्वस्य (७,१,१०२)'। पुरम्। वपुषः शरीरस्य पूरकं पालकं वा वपुः पुरं सत्। पृषोदरादित्वात् (६,३,१०९) वकाराकारलोपेन पकारद्वयस्य बकारादेशो विसर्जनीयस्य रेफादेशेन बुर्बुरम्। बुर्बुरमस्मिन्नस्तीति वा मत्वर्थीयोऽकारः (५,२,१२७), बुर्बुरवत्। * * *। निगमोऽन्वेषणीयः॥

(२३) सुक्षेम। 'क्षि निवासगत्योः (तु० प०)', 'क्षि क्षये (भू० प०)'—इत्यस्माद्वा 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १,१३७) बाहुलकादभिधानलक्षणाद्वा। 'क्वचिन्नकार... त सञ्ज्ञा न भवति'—इति उणादिवृत्तिः। क्षियन्ति निवसन्त्यनेन ... नः, गच्छन्त्यनेन पन्थानमिति वा, उपरिभागेन क्षीयते वा। ...; पूर्वस्माद् धातुद्व... मनिनि रूपसिद्धिः। 'सुक्षोम'—इति ... वः

पठति, निगमदर्शनान्निर्णयः । 'वृष्ट्यै त्वा क्षेमाय त्वा (य० ? )'— इत्यत्र क्षेमशब्द उदकनामापि भवितुमर्हति ॥

(२४) धरुणम्*। 'धृञ् धारणे (भ्वा० उ०)'। 'हेतुमति च (३,१,२६)'—इति णिच्। धारेर्णिलुक् क्युन् प्रत्ययः। धारयति जगत् धरुणम्। "पृथ्वी विमुर्गे धरुणेषु तस्थौ (ऋ० सं० ७,५,३३,६)" —"धीरा इच्छेकुर्धरुणेष्वारभम् (ऋ० सं० ७,२,२८,३)"—इति निगमौ ॥

(२५) सिरा†। 'सृ गतौ (भ्वा० प०)' पचाद्यचि (३,१,१३४) टाप् (४,१,४), सरा; अकारस्येकारो व्यत्ययेन (३,१,८५)। "वृत्र माशयानं सिरासु (ऋ० सं० १,८,२६,१)"—इति निगमः। 'सरणशीलास्वप्सु'—इति माधवभाष्यम्। 'सुरा'—इति केचित् पठन्ति। 'षुञ् अभिषवे (स्वा० उ०)'; 'अभिषवः क्लेदनम्'—इति तद्वृत्तिः। 'षु प्रसवे' भ्वादिरदादिश्च (प०)। 'सुसूधाग्टधिभ्यः क्रन् (उ० २,२३)'—इति क्रन्-प्रत्ययः। सुनोति क्लेदयति भूमिमिति। प्रसौति अनुजानाति सस्याद्युत्पत्तिं स्वसत्तया, सूयते वा परे[illegible] स्वामिनां विनियोगाय। यद्वा; 'सुर ऐश्वर्ये' तुदादिः (प०)। सुरा[illegible] ईश्वरं भवति जगत् कर्त्तुं समर्थो भवतीत्यर्थः। निगमोऽन्वे-[illegible]ः ॥

[illegible] (२६) अररिन्दानि। 'रा दाने (अदा० प०)'। 'आदृगमहना [illegible] कि-किनौ लिट् च (३,२,१७१)'—इति कि-प्रत्यय[illegible] [illegible]त् द्विर्वचनादिः। ररिर्दाता। ररिर्यस्य न [illegible] [illegible]ठिताः।

* निरु० १२, १०। † 'सुरा' निरु० [illegible]

अन्यैरदत्तमित्यर्थः। तद्ददाति 'आतोऽनुपसर्गे कः (३,२,३)' अर-रिदम्। नकार उपजनः अररिन्दम्। अथवा 'कृत्यल्युटो बहुलम् (३,४,११३)'—इति कर्मणि क्विर्भवति। ररि = दत्तम्, न ररि अररि = अदत्तम् पृथिव्यादिभिः; किन्तत्? सुखम्। अररि ददातीति पूर्ववत्। उदकेन यद्दीयते सुखादिकं तच्चान्यैः पृथिव्या-दिभिः दातुमशक्यत्वाददत्तमित्युच्यते। "अधारयदररिन्दानि सुक्रतुः (ऋ० सं० २,२,४,५)"—इति निगमः। अत्र 'अदत्तदानमुदकैः'—इति माधवनिर्वचनानुक्रमणी॥

(२७) ध्वस्मन्वत्। 'ध्वंसु गतौ च (भ्वा० आ०)'। चकारादधः-पतनेऽपि। औणादिको मनिन् भावे (उ० ४,१४०)। बाहुल-काद्-लोपः (१,३,१)। ध्वस्म ध्वंसनं मेघेभ्यः पर्वतादिभ्यो वा अधः-पतनं निम्नप्रदेशगमनम्। जलार्थिकर्तृकं वा गमन मस्यास्तीति मतुप्; 'अनो नुट् च (८,२,१६)'—इति मतुपो नुडागमः, नुटो ऽसिद्धत्वात् (८,२,१) तस्य च वत्वं भवति (८,२,९)। 'ध्वस्मन्वत् स्यात् ध्वंसनवत्'—इति माधवनिर्वचनानुक्रमणी। "सं त्वा ध्वस्म-न्वदभ्येतु पाथः (ऋ० सं० ४,५,१९,२)"—इति निगमः। [illegible] वस्तु 'समभ्येतु त्वां मदीये वर्धमानं ध्वंसनक्रियायुक्तमन्नं वचनं स्[illegible]णीयं सहस्रसङ्ख्याकम्'—इत्यभाषयत्* ॥

(२८) जामि†। जामेर्गतिकर्मणो (निघ० २,१४) 'वसि[illegible] त-(उ० ४,१२१)'—इत्यादिना विहित इञ् बाहुलकाद् भ[illegible] र्म-सञ्ज्ञा न [illegible]

---

न:, गच्छन्त्यने[illegible]

* [illegible]ो यथाश्रुतः सायणीयः।

† पूर्वस्माद् धातुव[illegible] ५,१। निरु० २,४; ६.४, १०.१०, १६।

जमति गच्छति निम्नं प्रदेशं, गम्यते वा जलार्थिभिः । यद्वा; 'जनी प्रादुर्भावे (दि०आ०)' । अस्मात् 'जनिघसिभ्यामिण् (उ०१२६)' —इति इण् प्रत्ययो बाहुलकान्नकारादेशश्च दीर्घः (३,३,१)। जायतेऽस्मात् पृथिव्यादि, जायते वा स्वकारणात् 'अग्नेरापः अद्भ्यः पृथिवीति (तै०उ०)' श्रुतेः । "जामिवत्"—इत्यन्ये पठन्ति । निगमदर्शनान्निर्णयः ॥

(२९) आयुधानि* । 'युध सम्प्रहारे (दि०आ०)' । 'घञर्थे क-विधानम् (३,३,५८वा०)'—इति कः । आयुध्यत्यनेनेत्यायुधम् । यद्वा; 'इगुपधज्ञाप्रीकिरः कः (३,१,१३५)'—इति कर्त्तरि कः । आयुध्यते सम्प्रहरति रक्षांसि । जसि आयुधानि । "इन्द्रे सन्तिष्ठ जनयायुधानि (ऋ०सं०७,४,८,२)"—"जामि ब्रुवाण आयुधानि वेति (ऋ०सं०७,६,४,२)"—इति च निगमौ ॥

(३०) चपः । 'चप प्रेरणे (चु०प०)' । कथादिष्वपठितोऽपि 'बहुलमेतन्निदर्शनम् (चु०ग०सू०)'—इत्यस्योदाहरणत्वेन† धातु-वृत्तौ पठ्यते । असुनि णिलोपः । चिपयति प्रेरयति नाशयति पिपा[illegible]। "चपो जिन्वन्तः पृषतीभि ऋष्टिभिः (ऋ०सं०१,५,७, ३)"—इति निगमः ॥

(३१) अहिः‡ । मेघनामसु निरुक्तम् (१,१०) । गच्छन्ति निम्नं प्रदे[illegible], आभिमुख्येन हन्ति तापम्, अहिंसकं वा प्राणिनाम् । "पृथिव्या

* निरु० १०, ६ ।

† कथादिश्चुरादेरन्तर्गणः, अत्र सर्वे एवादन्ता धातवः पठिताः ।

‡ पु० १० ।

निशशा ऽहिम् (ऋ०सं० १,५,२८,१)"—इत्यत्र 'शश प्लुतगतौ (भ्वा०प०), अन्तर्णीतण्यर्थः, निर्गमभूमौ पातनमुच्यते, अहिम् मेघं वृत्रमित्यर्थः'—इति स्कन्दस्वामिभाष्यम्। उदकं भवितुमर्हति। अन्वेषणीयो निगमः॥

(३२) अक्षरम्*। निरुक्तं वाङ्नामसु (१,११)। व्याप्नोति जगत्, अश्यते भुज्यते वा प्राणिभिः, अनक्ति सेचयति भूमिं वा, न क्षरति चीयते कदाचिदपीति वा। "ततः क्षरत्यक्षरम् (ऋ०सं० २,३,२२,२)"—इति निगमः॥

(३३) स्रोतः। 'स्रु गतौ (भ्वा०प०)'। 'स्रुरीभ्यां तुट् च (उ० ४,१९७)'—इत्यसुन्। स्रवति निम्नं देशम्। "धन्वन् स्रोतः कृणुते गातु भूर्मिम् (ऋ०सं० १,७,२,५)"—इति निगमः॥

(३४) तृप्तिः। 'तृप् प्रेरणे (दि०प०)'। क्तिन्। यद्वा; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३,३,१७४)'—इति क्तिच्। तृप्यन्ति हि देवतास्तेन तर्पिताः, तृप्यन्ति तेन पीतेन प्राणिन इति वा। तथाच श्रुतिः—'मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः' (अथ०सं० ३,१३,६)। निगमोऽन्वेषणीयः॥

(३५) रसः†। रसतिः शब्दार्थः (भ्वा०प०)। पचाद्यच् [...] ,१, १३४)। रसति हि तन्मेघपर्वतादिभ्यः पतत्। यद्वा; 'रस [...] दने (चु०प०अ०)'। 'पुंसि सञ्ज्ञायां घः (३,३,११[...])। रस्यते आस्वाद्यते जिह्वया लिह्यते इति रसः। यद्वा; रसोऽपां [...]

---

* पृ० ११।　　† पृ० ११।
‡ 'आपश्चतुर्गुणा रसेन'—इति निघ० प० २, ४।

गुणगुणिनोरभेदोपचारेणाख्यायते ; मत्वर्थीयस्य लुग् वा रसवान् रसः। यद्वा ; रसतिरर्चतिकर्मा (३,१४), पचाद्यच् (३,१,१३४); अर्च्यते देवतात्वात्, अर्च्यतेऽनेन देवता इति वा। "आ त्वा विशन्त्विन्दवः (ऋ० सं० ६,६,१९,२)"—इति निगमः ॥

(३६) उदकम्* । 'उदकञ्च (उ० २,३६)'—इत्युणादि-सूत्रेण उदकशब्दो निपात्यते। क्वुन्-प्रत्यये खनतेरुत्पूर्वस्य धातुलोपः। उत्खायते तद् वायुना विभज्यमानं कर्म, उत्खनति वा भूमिं स्वेन वेगेन कर्त्ता। उत्पूर्वस्य वाञ्चतेर्लोपः उदकमिति ; उदञ्चतीत्युदकम्। "उदानिषुर्महीरिति तस्मादुदकमुच्यते (अथ० सं० ३,१३,४)"—इति, "समानमेतदुदकम् (ऋ० सं० २,३,२३,५)"—इति, "मण्डूका इवोदकान् (ऋ० सं० ८,८,२४,५)"—इति, "मण्डूका उदकादिव (ऋ० सं० ८,८,२४,५)"—इति च निगमाः।

(३७) पयः† । 'प्रीञ् तर्पणे (क्र्या० प०)'। असुन् (उ० ४,१८४)। तृप्यन्तेऽनेन देवताः। यद्वा ; प्रपूर्वात् यमते (भू० प०) रसुं. टिलोपो बाहुलकात्। प्रकर्षेण गच्छन्ति पयः। "आपो न द्वीत [illegible]ति पयांसि (ऋ० सं० २,४,८,३)"—इति निगमः ॥

(३८) सरः‡ । 'सृ गतौ (भू० प०)'। असुन् (उ० ४,१८४)। सर[illegible] (स्रियते वा सरः। "साकं सरांसि त्रिंशतम् (ऋ० सं० ६,५,२६[illegible])"—इति निगमः ॥

(३९) भेषजम्§ । 'भिषज् चिकित्सायाम्' कण्ड्वादिः (प०)।

---

* निघ० १,२४। † प० १,७। ‡ पु० ११।
§ प० ३,६। निघ० १०,७; २५।

पुंसि संज्ञायां घः (३,३,११८)। भिषज्यन्त्यनेन भेषजम्, 'अनन्तावसथेतिह भेषजात्'—इति निर्देशात् साधु। "आपू इद्वा उ भेषजीरापो (ऋ० सं० ८,७,२५,६)"—इति श्रुतिः। 'भेषं रोगं जयति'—इति दुर्गः। यद्वा; भेषजमस्मिन्नस्तीति भेषजम्। अर्श आदित्वादच् (५,२,१२७)। तथा "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा (ऋ० सं० १,२,११,५)"—इति श्रुतिः। निगमोऽन्वेषणीयः॥

(४०) सहः*। सहिरभिभवार्थः (दि० प०), अभिभवते उष्णमग्निं वा। यद्वा; सहो बलं (निघ० २,९), तदस्यास्तीति मत्वर्थीयस्य लुक् (१,४,१९वा०)। बलवत् हि बलम्। "मुहदातुं पुरुहूत क्षियन्तं (ऋ० सं० ३,२,२,३)"—इति निगमः। सकारलोपश्छान्दसः॥

(४१) शवः†। 'टु ओ श्वि गतिवृद्ध्योः (भ्० प०)'। 'श्वेः सम्प्रसारणञ्च (उ० ४,१८८)'—इत्यसुन्। श्वयति गच्छति वर्द्धते वा वर्षाकाले। शवतेर्वा गतिकर्मणः (निघ० २,१४) असुन्। शवति गच्छति शवः। निगमोऽन्वेषणीयः। माधवेन स्वीये नाम... 'शवः'—इत्येतन्नापाठि, 'शिवम्'-'शापम्' इत्येते पठिते। ... माशब्दाशिवासु मातृषु प्रतीपं शपन्त्यो वदन्ति। शिवमिति ... गमं दृष्टमपि भाषायामपि जलपर्यायत्वात् अत्र तत्पर्यायेन ... पाठे प्रयोजनं मन्दम्, शापमित्येतत्त्वत्यन्ताप्रसिद्धम् प्रायः पूर्वे ... समाम्नाये ... तम्। अस्य च उदकनामत्वेनाप्रसिद्धत्वात्, ...

* प० १, ९। निरु० ५, २५. ११, ९।

† प० २, ९। निरु० १०, २९; ११. ११, २१; १४. १२, ११।

ओजः सहः इत्याभ्यां सह प्रसिद्धपाठेऽत्र दृष्टत्वात्, प्रायोऽक्षरसाम्याच्च लेखकैः प्रायेण श्रव इति लिखितमिति । श्रपन्त्यनेनेति श्रापम् । 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ् । हस्ते ह्युदक मादाय श्रपन्ति मुनय इति श्रूयते ॥

(४२) यहः* । यातं प्राप्तं पिपासितैः, हुतं च यज्ञे देवताभ्यात् । असुनि यातेर्ह्वयतेश्च द्विधातुजं रूपम्; पृषोदरादिः । (६,३,१०९) निगमोऽन्वेषणीयः ॥

(४३) ओजः† । 'उब्ज आर्जवे (तु०प०)' । 'उब्जेर्बलोपश्च (उ०४,१८७)'—इत्यसुन्, बाहुलकादुदकेऽपि भवति । उब्जते रुक्षपक्षे न्यग्भावार्थस्य । उब्जतेर्वा नैरुक्तधातोर्वृद्धिकर्मणोऽसुन् प्रत्ययः । उब्जत्यनेनेत्युक्तं । न्यग्भावयति वा स्ववेगेनानतप्रदेशं, वर्द्धते वा वर्षासु बलवद्वा । निगमोऽन्वेषणीयः ॥

(४४) सुखम्‡ । सुखावहत्वात् सुखम् । 'सुखं कस्मात्? सुहितं खेभ्यः निरु० ३,१३)'—इति भाष्ये स्कन्दस्वामी । सुष्ठु हितं खेभ्यः । नेयं हितयोगलक्षणा चतुर्थी (१,४,४४वा०), इन्द्रियाणामचैतन्यात् [illegible]वादिभिरसम्बन्धात्; अत इयं हेतौ पञ्चमी (२,३,२५), [illegible]यसन्निकर्षस्य सुखहेतुत्वात् उपपद्यते इन्द्रियाणां हेत्वर्थ[illegible]सम्बन्धानुपपत्तेश्च सम्बन्धयोगपदार्थान्तराध्याहारः । अति-शय[illegible]हितं पुरुषस्य, खेभ्यः ख-हेतुकमित्यर्थः । हितं वा पुरुषे आ[illegible]र्मत्वात् सुखादीनां धर्माधिकरणत्वाच्च धर्मिणाम् । अथवा

---

* प० २,९ ।

† प० २,९ । निरु० ६,८ ।

‡ निरु० ३,१३ ।

खेभ्य इति चतुर्थ्येव; ख-शब्देन च आत्मा मनसा संयुज्यते मन इन्द्रियेणेति सम्बन्धिसम्बन्धात् पुरुष एवोच्यते इति यथाश्रुतसम्बन्धः। तथाचोपनिषत्—'वर्ण्यः स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः'। क्षुराधाने अव्यवहितं स्यादित्युपलक्ष्य प्राणान्ते च प्राणानां भवतीति प्राणादिशब्दैस्तस्योहसिद्धं दर्शयति—'खं पुनः खनतेः (निरु० ३,२१)', उत्पूर्वस्य उत्खनति विनाशयति, किम्? परत्रसुप्राप्तिसुखम्, कथम्? कायसुखप्रवृत्तेरधोगमनात् इति सुखम्। निगमोऽन्वेषणीयः॥

(४५) क्षत्रम्*। 'क्षदिः सौत्रः'। 'क्षद स्थैर्ये' इति स्कन्दस्वामी। माधवपक्षे क्षदिः शकलीकरणार्थो हिंसार्थश्च। 'क्षद गतिहिंसनयोः'—इति सुबोधिनीकारः†। 'गुधृवीपचिवचियमि [मनि] सदिक्षदिभ्यस्त्रः (उ० ४,१६२)'। वर्षाव्यतिरिक्तेषु ऋतुषु सूर्यरश्मिभिराहृता ह्यापो मेघेषु घनीभूताः पाषाणवत् स्थिरा भवन्ति; जलाशयं प्राप्य वा; अश्यते भुज्यते वा; अतिपीतं श्लेष्मादि जनयित्वा प्राणिनो हिनस्ति वा; गच्छति निम्नं गम्यते वा तदर्थिभिः। यद्वा; क्षत्रशब्दो बलनाम। अर्श आद्यच् (५,२,१२७)। बलवद्धि जलम्। [illegible]लनाम वा (निघ० २,१०), तद्धेतुत्वात्ताच्छब्द्यम्। क्षतादन्नवृष्टि[illegible] ,१, त्रायन्ते इति वा क्षत-शब्दात् त्रायतेश्च क्षत्रम्, पृषोदरादित्वा[illegible] १०९)। "युवं नो येषु वरुण क्षत्रम् (ऋ० सं० ४,४,२[illegible] इहच बल मन्नं वेति माधवभाष्यम्। "उत द्यावापृथिवी [illegible]

* प० २, १०।

† क्षद संवरणेऽपि इति वोपदेवीयकविकल्पद्रुमे, यतो भवति क्षत्तेति।

(ऋ० सं० ४,८,८,३)"—इत्यत्र च वत्त्वं धनमिति द्रष्टम्। उभय-मप्युदकं भवितुमर्हति ॥

(४६) आवयाः। आङ् पूर्वात् 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु (अदा० प०)'—इत्यस्मात् 'इणश्चाभिः (उ० ४,२१६)' —इति बाहुलकादासि-प्रत्ययः। उपसर्गस्य धात्वर्थानुवर्त्तकः आभिमुख्यार्थो वा; अश्यते वीयते आभिमुख्येन गम्यते इति वा आवयाः निगमोऽन्वेषणीयः ॥

(४७) शुभम्। 'शुभ दीप्तौ (भू० आ०)'। क्विप् प्रत्ययः। शोभते दीप्यते स्वेन तेजसा देवतात्वात्। द्वितीयैकवचनस्य प्रयोगो यथादृष्टम्। "शुभं पृचमिषमूर्जं वहन्त (५,१,१,४)"—"इषं जनाय वहयः शुभस्पती: (७,८,१८,४)"—"द्रवत्पाणी शुभस्पती (१,१,५,१)"—इति च निगमाः ॥

(४८) यादुः। 'या प्रापणे (अदा० प०)'। 'भृ-मृशीङ्तृच-रित्सरितनिधनिमस्जिभ्य उः (उ० १,७)'—इति बाहुलकादुप्रत्ययो दुडागमश्च। याति निम्नं प्रदेशं यादुः। 'यादुः स्याद् गमनक्रियम्'—इति [illegible]धवः। तदानीमु-प्रत्ययो बाहुलकात्। "ददाति मह्यं [illegible]"—(ऋ० सं० २,१,११,६) इत्यत्र स्कन्दस्वामी—'यादुरि-[illegible]म, रोमलर्थीयः'—इति ॥

[illegible]९) भूतम्। 'भू सत्तायाम् (भू० प०)', निष्ठातकारः कर्त्तरि। [illegible] सत् भूतम् प्रथमदृष्टत्वात्। 'अपएव ससर्जादौ तासु वीज-[illegible]जत् (१ अ० ८श्लो०)'—इति मनुः। अथवा 'भू प्राप्तौ (वा [illegible]—इति धातुः। प्राप्यं पिपासितैः। यद्वा; पञ्चसु पृथिव्या-

दिषु महाभूतेष्वन्तर्भावात् भूतमित्युच्यते। 'मातान्तरिचं निर्भीयन्ते अस्मिन् भूतानि (२,८)'—इति निरुक्त एवोदाहरणम्। निगमोऽन्वेषणीयः॥

(५०) भुवनम्*। 'भू सत्तायाम् (भू० प०)'। 'भूसुधूभ्रस्जिभ्यश्छन्दसि (उ० २,७५)'—इति क्युन्-प्रत्ययः, उवङादेशः। भवन्त्यनेन सर्वे पदार्था इति भुवनम्। "य इमा विश्वा भुवनानि जुह्वत् (ऋ० सं० ८,३,१६,१)"—"इमा च विश्वा भुवनान्यस्य (ऋ० सं० २,३,२१,४)"—इति च निगमौ॥

(५१) भविष्यत्। भवतेरेव। 'लृट् शेषे च (३,३,१३)'—इति लृट्, 'लृटः सद्वा (३,३,१४), 'स्यतासी लृलुटोः (३,१,३३)', इडागमः (७,२,३५)। जलं हि आगामिन्यपि काले विद्यते, प्रलयेऽपि जलत्वस्य नाशाभावात्। निगमोऽन्वेषणीयः॥

(५२) महत्†। 'मह पूजायाम्' भूवादिः (प०), कथादिश्च (चु० अ०)। अस्मात् 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च (उ० २, ७८)'—इति निपातनम्। महति महयति वा देवता मनेन [illegible]स्येति महत्, मह्यते वा देवतात्वात्। यद्वा; मानेन स्वगतेन [illegible]णेन अन्यान् स्वस्मादूनप्रमाणान् पदार्थान् जहाति अतिक्रामति 'द[illegible],१ ण्यावरणानि सप्त'—इत्यत्र विष्णुपुराणे सर्वमहत्त्वं जलतत्त्वस्य [illegible] मानशब्दाज्जहातेश्च पृषोदरादित्वाद्रूपसिद्धिः। "महत्त उल्बं [illegible] तदासीत् (ऋ० सं० ८,१,१०,१)"—इति निगमः॥

---

* निरु० २, १२. ७, २५. ८, १४. १०, ११; २४; ४६. १२, ११।
† प० ३, २। निरु० ३, १२।

ह ) आपः*। एतदुक्तसमानार्थम् । * * * । कृत्स्नं ताभिर्हि
रिआप्नोतेः सङ्गह-कर्मकत्वात् । तथाचाथर्वणिका श्रुतिः—
... सर्वञ्च विश्वमावन् (अथ० सं० ४,२,६)'—इति । यद्वा;
कर्मणि क्विप्, इन्द्रेण आप्ता आपः, तदाप्नोतीन्द्रो वा। 'तदाप्नोदिन्द्रो
वो यतीस्तस्मादापो अनु ष्टन (अथ० सं० ३,१३,२)'—इति श्रुतिः।
"आपो हि ष्ठा मयोभुवः (७,४,५,१)"—इति निगमः॥

(५४) व्योम । निरुक्तमन्तरिक्षनामसु (३)। व्यवति प्राणिनः,
संवृणोति भूमिमिति वा । निगमोऽन्वेषणीयः॥

(५५) यशः‡। 'अशू व्याप्तौ (स्वा० आ०)'—इत्यर-प्रत्यया-
(क्रा० प०)'। 'अशेर्देवने युट् च (उ० ४, । पूर्ववदर्थः । यद्वा;
बाहुलकादुदकेऽपि भवति। 'अशेर्देरन्, 'हृग्रहोर्भश्छन्दसि' (सि०
अश्नुते व्याप्नो...) । रेफस्य मकारो बाहुलकात् स चाकारात् परः।
ऊर्द्धबुध्नो सतीवर्य्यादित्वेन । "गम्भरेषु प्रतिष्ठाम् (ऋ० सं० ८,६,२,
४, —इति निगमः॥ ९

...सादिनः) ईम् । अव्ययमिदम्। "... ...वदं यथा
... ४६ । महदित्यनेन समानम्। अचासुन् प्रत्ययः (उ०
...३)। "मह्ना जिनोषि महिनि (ऋ० सं० ४,४,२९,१)"—
...गमः। 'मह्नो अर्ण (ऋ० सं० १,१,६,३.निरु० ११,२७)'
...त्र 'मह उदकनाम'—इति स्कन्दस्वामी। "महोभ्यः स्वाहा
( )"—इति च॥

(७) सर्णीकम् । 'सृ गतौ (भू० प०)'। 'सर्त्तेर्नुम् च (उ० ४,

* पु० ३। † पु० ३। ‡ प० २, ७. १०।

२ ३)'—इतीकन् प्रत्ययः। अधिकृतं किंत्वन्तु बाहुलकात्। निर्णीयन्ते गुणाः, धावति सर्णीकम्। "सलिलाय त्वा सर्णीकाय त्वा निगमो- त्वा ( ? )"—इति निगमः॥

(५८) स्तृतीकम्। 'स्तृ शब्दोपतापयोः (भू०प०)', स्वरतिर्ग- त्यर्थः (निघ० २,१४), अर्चतिकर्मा च (निघ० ३,१४)। 'अली- कादयश्च (उ० ४,२५)'—इतीकन्-प्रत्ययान्तेषु द्रष्टव्यः, निपातनात्तु- गागमः। शब्दं करोति, गच्छति, पूज्यन्तेऽनेन देवताः, पूज्यते वा ... चालात् इति स्तृतीकम्। निगमोऽन्वेषणीयः॥ "सतीकम्" ३,२,३१,. पठन्ति। 'षट्लृ विशरणगत्यवसादनेषु (भू०तु०

(५९) भवि... (उ० ४,२५); दकारस्य तकारः। गच्छति इति त्वट्, 'त्वटः स ... वा। "सतीकाय त्वा ( ? )"— ३ ३)', इडागमः (७,२,३५)... ...कारणामभि- प्रलयेऽपि जलत्वस्य नाशाभावात्। निगमोऽन्वेषणीयः॥

(५२) महत्† । 'मह पूजायाम्' इत्येव औ... (चु०अ०)। अस्मात् 'वर्त्तमाने पृषन्महद्बृ... "तिर्यग् बि..." (उ० २ ... वा देवता भनेन ... अस्ये सा ईना ईश्वरा अस्य तत् सतीनम्; 'सञ्ज्ञापूरण्योश्च ... ८)' —इति पुम्वद्भावनिषेधः। "अर्यो सतीन कङ्कतः (ऋ०सं० ... १४,१)"—इति निगमः। "सतीन सत्वाहव्यो भरेषु (... १,७,८,१)"—इति च॥

(६०) गहनम्† । 'गाहू विलोड़ने (भू०आ०)'। 'युच् (उ० २,७४)'—इति युच् प्रत्ययः, बहुलवचनाद्ध्रस्वत्वम्।

---

* पदकारेण हि 'स। तीकाय' एवमवगृहीतम्। † प० १९. ६, ...

ह विना) भिः गहनम्। "अम्भः किमासीद् गहनं गभीरम् (ऋ० ...द्वादशः;रिश्च१ ७,१)"—इति निगमः। अत्राम्भः गभीरमित्येते नि-...सर्वपदार्थे॥

(६१) गभीरम्*। गमेर्धातोः 'गभीरगम्भीरौ (उ० ४,२४)' —इति नुगागम ईरन्-प्रत्ययो मकारलोपश्च निपात्यते। गच्छति यज्ञेष्वाहुतं वसतीवर्यादिरूपेण। "पथि दीने गभीर आँ (ऋ० सं० ६,४,५३,१)"—"न तं हन्ति स्रवतो गभीराः (ऋ० सं० ८, ६,५,४)"—इति च निगमौ॥

(६२) गम्भरम्। 'कदरादयश्च (उ० ५,४२)'—इत्यर-प्रत्ययान्तेषु द्रष्टव्यः। निपातनाद् गमेरन् भडागमश्च। पूर्ववदर्थः। यद्वा; 'ग्रह उपादाने (क्र्या० उ०)', पूर्ववदरन्, 'हृग्रहोर्भश्छन्दसि' (सि० कौ० वै० ३अ०)। रेफस्य मकारो बाहुलकात् स चाकारात् परः। गृह्यते वसतीवर्यादित्वेन। "गम्भरेषु प्रतिष्ठाम् (ऋ० सं० ८,६,२, ४)"—इति निगमः॥

...दिन) ईम्†। अव्ययमिदम्। "वि यदज्राँ अजथनावईं यथा (...४,३,१४,४)"—इति निगमः। बहुषु पाठेषु "कम्‡"— इति ...तिः तल्लिपिभ्रमतः। * * * अत ईमित्येव पठितव्यम्॥

(६४) अन्नम्§। 'अन प्राणने (अदा० प०)'। 'कृवृजृसिद्रुप-...वपिभ्यो नित् (उ० ३,९)'—इति न-प्रत्ययः। अन्यते प्राण्यते ...; न हि कदाचिदपि जलेन विना जीवन्ति प्राणिनः 'अस्य ...य

* पृ० ११। † प० ४,२। निरु० १,९. ४,१९. ५,२८।
‡ प० २,६। निरु० १,९; १४. ४, १८. ६, २५।
§ निरु० २,९।

शोषादयो दोषा भवन्ति यदलाभतः। न हि तोयाद् ...न्ते प्राणिभिः
स्वस्थस्याप्यातुरस्य च"—इति वाग्भटः। अत्तेर्वा निष्ठातका...
इति निर्देशात् जग्ध्यादेशाभावः, अद्यते स्म। अन्नहेर्ण-
मित्युच्यते। "हिरण्यदा ददत्यन्नमस्मै (ऋ० सं २,७,२३,५)"—
इति निगमः॥

(६५) हविः। 'हु दानादानयोः (जु० प०)'। 'अर्चिशुचि-
हुसृपिच्छदिच्छर्दिभ्य इसिः (उ० २,१०१)'—इति इसि-प्रत्ययः।
दीयते पिपासितेभ्यः, आदीयते वा जनैरुपभोगाय। अथवा हूयते
देवतोद्देशेन, प्रक्षिप्यते वैश्वानरे हविरिदं जुहोमीत्यादि मन्त्रैः।
"हविषा जारो अपां पिपर्त्ति (ऋ० सं० १,३,२३,४)"—"विश्वक-
र्मन् हविषा वावृधानः (ऋ० सं० ८,३,१६,६)"—इति च निगमः॥

(६६) सद्म*। (६७) सदनम्†। 'षद्लृ विशरणगत्यवसादनेषु
(भ्वा० तु० प०)'। पूर्वत्र, 'मनिन् (उ० ४,१४०)'—इति मनिन्
प्रत्ययः। उत्तरत्र, 'युच् बहुलम् (उ० २,७४)'—इति युच्; विशी-
र्यते शिलादिषु पातात्, विशीर्यन्तेऽनेन कुड्यादय इति वा;
वागच्छति निम्नं, गम्यते वा प्राणिभिः; अवसादयति पि...
वा। 'हविर्हविष्मो महि सद्म दैव्यम् (ऋ० सं० ७,३...
—इति निगमः॥

(६८) ऋतम्‡॥

---

* प० २, १७ ३, ४; ३०।
† निरु० ४, १७ ७, २४. १२, ४२।
‡ प० १, १०; २५. ३, ४. ४, १९. ५, ४. ६, २२. ८, ६; १९। निरु० १०

(६९) योनिः* । 'यु मिश्रणे (अदा०प०)' । 'वह्निश्रियुद्रुग्लाहात्वरिभ्यो निः (उ०४,५१)'—इति नि-प्रत्ययः । युतं मितं सम्पृक्तं सर्वपदार्थैः । यद्वा; वेतेर्वकारस्य उकारः, स च ईकारात्परः यणादेशः, स एव प्रत्ययः । परिवीतं हि जलं वायुना तीरेण वा । यद्वा; योनिः कारणमन्नस्य । 'वृष्टेरन्नं ततः प्रजाः (मनुः ३,७६)'—इति हि स्मृतिः । "चरत् प्रियस्य योनिषु प्रियः सन् (ऋ०सं० ८,७,७,५)"—"त्वचं पृञ्चन्त्युपरस्य योनौ (ऋ०सं० १,५,२७,३)"—इति च निगमौ ॥

(७०) ऋतस्य योनिः । यज्ञस्य योनिः; नह्युदकेन विना कश्चिदपि यज्ञः कर्त्तुं शक्यते, ऋतस्य आगामिनो वर्षजलस्य योनिर्वा,—आदित्यो भौमं रसं रश्मिनादत्ते पुनर्वर्षाकाले वर्षति; तथा—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः'—इत्युक्तम् । 'अस्य योनिर्भवति—इति माधवः । "ऋतस्य योनि मा सदः (ऋ०सं० ४,१,१३,—(ऋतस्य योनागर्भे सुजातम् (ऋ०सं० १,५,९,२)"—[illegible] २)'

नै[illegible]दिन

([illegible]) सत्यम्† । सत्सु भवम् 'भवेच्छन्दसि (४,४,११०)'—इ[illegible] । यद्वा; सत्सु साधुः 'तत्र साधुः (४,४,९८)'—इति [illegible] [illegible]तोऽर्हमिति वा 'छन्दसि च (५,१,६७)'—इति यः । [illegible] [illegible]विद्यामयाज्ज्ञानमृतात्सत्यमुपैति ( ? )"—"ऋतात् सत्य[illegible] ( ? )"—इति च निगमौ ॥

---

* प० २, ४ । निरु० २, ८; १९ ।

† प० २, १० । निरु० १, १३. ३, १३ ।

(७२) नीरम्* । 'णीञ् प्रापणे (भ्वा० उ०)' । 'स्फायितञ्चिवञ्चि-शकि (उ० २,१२)'—इत्यादिना रन्-प्रत्ययः । नयति प्रापयति शुद्धिं नीयते वा पुरुषेण स्वाभिमतकार्यसम्पादनाय । निगमोऽन्वेषणीयः ॥

(७३) रयिः† । 'रीङ् गतौ (‡)' । 'अच इः (उ० ४,१३४)' —इति इ-प्रत्ययः, ... । रीयते गच्छति रयिः । यद्वा ; रातेः (अदा० प०) इ-प्रत्यये बाहुलकात् युगागमो धातोर्ह्रस्वश्च । दीयते पिपासितेभ्यः । निगमोऽन्वेषणीयः ॥

(७४) सत्§ । 'अस भुवि (अदा० प०)' । लटः शतरि 'श्नसो-रल्लोपः (६,४,१११)', सत् । सर्वदा विद्यमानं प्रलयेऽपि नाशा-भावात् 'सदसि भूयाः ( ? )'—इति निगमः ॥

(७५) पूर्णम् । 'पॄ पालनपूरणयोः (जु० क्र्या० प०)' । निष्ठा-...रः । 'उदोष्ठ्यपूर्वस्य (७,१,१०२)', 'हलि च (८,२,७७),' (भू० ...भ्याम् (८,२,४२)'—इति निष्ठानत्वम्, 'रषाभ्यां नो णः (८,४, प्रत्ययः -इति णत्वम् ; पूर्णम् । रचितं सेवादिना, तदर्थिभिः ...रितं ...र्यते ...कटाहादिषु । यद्वा ; 'पूरी आप्यायने' दिवादिस्तुरादिश्च । 'वा ...दान्तशान्तपूर्णदस्त (७,२,२७)'—इत्यादिना निपातितम् ... भाग-क्षीणं आप्यायितम् । "पूर्णं पूर्णेन सिच्यते (अथ० सं० १०, ..., ...)" —इति निगमः ॥

(७६) सर्वम्‖ । 'सृ गतौ (भ्वा० प०)' । 'सर्वनिघृष्वरिष्व... ...शिव-

* प० ३, ४ । † प० २, १० । निरु० ४, १७ ।

‡ 'रीङ् श्रवणे' दिवादिः, 'री गतिरेषणयोः' क्र्यादिश्च दृश्येते ; ...तु 'रीङ् गतौ क्वापि ।

§ प० ३, २९ । निरु० ३, १० । ‖ निरु० २, २४ ।

पट्वप्रङ्केभ्यो अतन्त्रे (उ० १, १५१)'—इति निपातितम् । अतन्त्रे अकर्त्तरीत्यर्थः । सृतमनेन । यद्वा; बाहुलकात् कर्त्तरि भवति; सर्वम् । उभयत्रापि पचाद्यच् (३, १, १३४) । हिनस्ति पिपासामुष्णं वा । 'सर्वमसि सर्वं मे भूयाः ( ? )'—इति निगमः ॥

(७७) अचितम्* । 'चि चये (भू० प०)' । भावे निष्ठातकारः । चितं चयः, स यस्य न विद्यते, तदचितम् । सर्वदा सर्वं रुपभुज्यमानमपि स्वमहत्तया उपर्य्युपरि वर्षणाद्वा चयरहितमित्यर्थः । चियः 'निष्ठायामण्यदर्थे । वाक्रोशदैन्ययोः (६, ४, ६०-६१)'—इति विहितो दीर्घः, अत्र च भावो ण्यदर्थः, तस्मात् स न भवति; दीर्घाभावात् 'चियोदीर्घात् (८, २, ४६)'—इति निष्ठानत्वमपि न भवति । "उत्समचितं व्यचन्ति (अथ० सं० ४, २७, २)"—"समानमर्य्यमचितम् (ऋ० सं० २, १, १८, ५)"—"अचितमत्यै जुहोमि स्वाहा ( ? )"—इति च निगमाः ॥

(७८) बर्हिः† । निगमोऽन्वेष्यः । 'वृंहेर्नलोपश्च (उ० २, १०१)'—इत्यादिना पूर्ववत् साध्यम् ॥

(७९) नाम‡ । नमतेः (भू० प०), 'मनिन् (उ० ४, १४०)'—इति [illegible] मन्-प्रत्यये धातोर्मलोपो दीर्घश्च निपात्यते§ । नम्यते पुरुषे [illegible]त्वात् । णिजन्ते वा निपातनम् । नमयति नदीतीरनिकट-

---

यत् निरु० ५, ११, ११, ११ ।
† पु० ३. प० ५, २ । निरु० ८, ८ ।
‡ निरु० ३, २२. ४, २५ ।
§ 'नामन्-सीमन् (उ० ४, १४६)'—इत्यादिनेति यावत् ।

वर्त्तिनो वेतसादीन्। अथवा 'अम गत्यादिषु' 'भूवादिः 'अम रोगे' चुरादिः, नञ्-पूर्वः ; अस्मान्निपापनं पूर्ववत् । न अमन्ति गच्छन्त्यनेन। न हि स्नानपानोपयोगिजले विद्यमाने प्राणिनोऽन्यत्र गच्छन्ति। तथाहि—श्रोत्रियसजलनदीप्रभृतिषु विद्यमानेष्वेव वासो विधत्ते स्मृतिः । न आमयत्यनेन रोगी न भवत्यनेनेत्यर्थः। 'आपो अमी-वचातनीः (ऋ०सं० ८,७,२५,६)'—इति श्रुतिः। "नामानि यह्वो अधि येषु वर्द्धते (ऋ०सं० ७,२,२३,१)"—"दधाना नाम यज्ञियम् (ऋ०सं० १,१,११,४)"—इति च निगमौ॥

(८०) सर्पिः। 'सृप्ल गतौ (भू०प०)'। 'अर्चिशुचिहुसृपिछादिच्छर्दिभ्य इसिः (उ० २,१०१)'—इति इसि-प्रत्ययः। सर्पति द्रवद्रव्यत्वात्। * *। निगमोऽन्वेषणीयः॥

(८१) अपः*। 'आप्लृ व्याप्तौ (स्वा०उ०)'। आपः कर्माख्यायां ह्रस्वो नुट् च वा (उ० ४,२०२)'—इत्यसुन् प्रत्ययो बाहुलकात् जलेऽपि भवति ; अपः। आप इत्यनेन समानार्थम्। "बह्वीनां गर्भो अपसामुपस्थात् (ऋ०सं० १,७,१,४)"—"जामीनामग्निरपसि स्वसॄणाम् (ऋ०सं० २,८,१४,१)"—इति च निगमौ॥

(८२) पवित्रम्†। 'पूञ् पवने (क्र्या०उ०)'। 'पुवः संज्ञायाम् (३,२,१८५)'—इति करणे इत्र-प्रत्ययः। पुनात्यनेनात्मा[illegible]तः। अथवा 'कर्त्तरि चर्षिदेवतयोः (३,२,१८६)'—इत्यपां देवतात्वात् कर्त्तरि इत्र-प्रत्ययः। पुनाति पापकृतः। तथाच म[illegible] ज्ञानं

* प० २, १। निरु० ७, २७।
† प० ४, २। निरु० ५, ६।

तपोऽग्निराहारोमृन्मनोवार्युपाञ्जनम्। वायुः कर्म्मार्ककालौ च शुद्धेः कर्त्तृणि देहिनाम् (५अ० १०५श्लो०)'—इति। "घृतपवित्राः स्वधया मदन्तीः (ऋ० सं० ५,४,१४,३)"—इति निगमः॥

(८३) अमृतम्*। नञ्-पूर्वात् म्रियतेर्धातोः 'तनिमृङ्भ्यां किच्च (उ० ३,८५)'—इति तन् प्रत्ययः। न म्रियन्ते हि प्राणिनोऽनेन पीतेन। अथवाऽत्यन्तस्वादुरसत्वादमृतमित्युच्यते; तथा 'अमृतोह्यापः'—इति श्रुतिः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २,३,१८,१)"—इति निगमः॥

(८४) इन्दुः†। 'ञि इन्धी दीप्तौ (रु० आ०)'। अस्मात् 'उन्देरिच्चादेः (उ० १,१२)'—इति विधीयमान उ-प्रत्ययो बाहुलकाद् भवति, धकारस्य दकारश्च। इन्धे दीप्यते स्वेन तेजसा देवतात्वात्। यद्वा; 'उन्दी क्लेदने (रु० प०)'। 'उन्देरिच्चादेः (उ० १,१२)'—इत्यु-प्रत्यय आदेरिदादेशश्च उनत्ति भूमिमिन्दुः। यद्वा; 'इदि परमैश्वर्ये (भू० प०)'। अस्मादु-प्रत्ययः। परमेश्वरं हि जलं देवतात्वात्, प्राणिनां प्राणनस्य जीवनस्य च तदायत्तत्वाच्च। निगमो[illegible]न्वेषणीयः॥

(८[illegible]) हेम‡। हिरण्यनामसु व्याख्यातम् (२)। हिनोति गच्छति निम्नं [illegible]ं, गम्यते वा तदर्थिभिः, वर्द्धते वा वर्षासु। निगमोऽन्वेष[illegible]यः§॥

([illegible]) यत् स्वः‖। सुपूर्वादर्त्तेरन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि दृश्यन्त

---

* पु० २। † प० ३, १७. ५, ४। निरु० १०, ४१। ‡ पु० २।
§ सा० छ० आ० ६, २, ४, ४ द्रष्टव्यः। ‖ पु० ४।

(३,२,७५)'—इति विच्, गुणः, 'स्वरादिनिपातमव्ययम् (१,१, ३७), सुपो लुक्, रेफस्य विसर्जनीयः। अनावृष्ट्यादिजनितं क्लेशं सुष्ठु शोभनं गमयति नाशयति; स्वः। यद्वा; केवलादेव स्वार्थे णिच्, 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः'—इत्युक्तेरिष्टार्थसिद्धिः। अरणं गमनं दोषरहितत्वेन शोभनं यस्य, सुष्ठु गच्छति निम्नं प्रदेशमिति वा, सुष्ठु प्राणिभिर्गम्यते इति वा; स्वः। अकारान्तमप्यस्ति। सुपूर्वाद्रमतेश्च बाहुलकाद् भवति। * * *। "आविः स्वः कृणुते गूहते बुसं (ऋ०सं० ७,७,१८,४)"—"स्वः१ः सिषासन्तथिरो गविष्टिषु (ऋ०सं० ७,३,१,२)"—इति च रेफान्तस्य निगमौ। "आसु स्वासु वंसगः (ऋ०सं० ८,८,२,३)"—इत्यकारान्तस्य। समाम्नायपाठः उभयत्र समानः॥

(८७) सर्गाः। 'सृज विसर्गे (तु०प०)'। कर्मणि घञ्। सृज्यते मेघैर्विसृज्यत इति सर्गः; जसि सर्गाः। यद्वा; सर्गो वेगः; 'अर्श-आदित्वादच् (५,२,१२७)'। वेगवन्ति हि जलानि। "सर्गासो वर्तांइव (ऋ०सं० ७,७,११,४)"—इति निगमः॥

(८८) शम्बरम्*। सम्पूर्वाद् वृणोतेः 'ग्रहवृदृनिश्चिगमश्च [illegible] ३,३, ५८)'—इत्यप्। संव्रियते मेघैः। यद्वा; पचाद्यच् (२,१ [illegible] ), वृणोति हि भूमिं संवरम्। पृषोदरादित्वात् (६,३,१०९ [illegible] म्बरम् यद्वा; शम्बो वज्रः निरुक्तो मेघनामसु(१०)। तद्वानपि [illegible] शम्बः, मत्वर्थीयस्य लुक्। 'रा दाने (अदा०प०)'; शम्बेनेन्द्र [illegible] दीयते शम्बरः। 'घञर्थे क-विधानम् (३,३,५८वा०)'—इत्यस्मिन् [illegible] णार्थ-

* पृ० १०।

त्वात् कः। यद्वा; शञ्च तदरञ्च शम्बरः। शमनं च रोगाणामुत्कृष्टञ्च सर्वपदार्थेषु इत्यर्थः। 'शम्बरं सम्बरं जलम्'—इति माधवः। "अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् (ऋ०सं० २,१,१९,२)"—इति निगमः॥

(८९) अभ्वम्*। आङ्-पूर्वात् भवतेः क इत्येष बाहुलकाद् भवति, उपसर्गह्रस्वत्वञ्च। 'छन्दस्युभयथा (६,४,८६)'—इति सुपि भूसुधियो र्विधीयमानो यणादेशो व्यत्ययेन क-प्रत्ययेऽपि भवति। आ समन्ताद् भवति विद्यते अभ्वम्। 'अभ्वमा भवति'—इति माधवः। "सनेम्यस्मद्युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ्नः। सनेम्यभ्वं मरुतो जुनन्ति (ऋ०सं० २,४,८,२)"—इति निगमः॥

(९०) वपुः†। 'टु वप बीजतन्तुसन्ताने (भू०उ०)'। 'अर्त्तिपृवपियजितनिधनितपिभ्यो नित् (उ० २,११०)'—इत्युसि-प्रत्ययः। स्वं०नेन बीजम्; बीजवपने हि जलं साधकतमं भवति। "चरिष्णवेर्गार्भपुषामिदेकम् (ऋ०सं० ३,५,७,४)"—इति निगमः॥

(९१) अम्बु‡। अन्तरिक्षनाम्नोऽम्बरशब्दस्य निर्वचने विस्तरेणोक्त (८)। निगमोऽन्वेषणीयः॥

(९२) तोयम्§। तवतेर्वृद्धिकर्मणः (निरु० ९,२५) 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययो निपातितो द्रष्टव्यः। वर्द्धते वर्षासु। 'तुदति तोयम्'—इति क्षीरस्वामी। तुदतेः पूर्ववत् यत्-प्रत्यये निपातनाद् दकारलोपो गुणः। यद्वा; तुदिः

* पु० १०। † प० २, ७।
‡ निघ० २, १०। § प० २, १५।

सौत्र आवरणार्थः। "तोयेन जीवन्व्यः ससर्ज भूम्याम् ( ? )"—इति निगमः॥

(९३) तूयम्*। पूर्ववन्निपातनाद्रूपसिद्धिः। उकारस्य दीर्घः (६,३,१३३)। निगमोऽन्वेषणीयः† ॥

(९४) क्षपीटम्। 'क्षपू सामर्थ्ये (भू० आ०)'। 'कृटक्षपिभ्यः कीटन् (उ० ४,१८०)'—इति कीटन् प्रत्ययः। 'क्षपो रो लः (८, २,१८)'—इत्यत्र, काशिकावृत्तिः —'क्षपण-क्षपीट-कर्पूरादयोऽपि क्षपेरेव द्रष्टव्यः'। 'उणादयो बहुलम् (३,३,१)'—इति च क्षपेरेव बाहुलकाल्लत्वाभावः। भाष्ये तु—'क्षपणादीनां प्रतिषेधो वक्तव्यः (८, २,१८भा०)'—इति लत्वाभावः। कल्पते तापनिवारणाय। "यत्रा क्षपीटमनु तद्दहन्ति (ऋ० सं० ७,७,२१,२)"—इति निगमः॥

(९५) शुक्रम्‡। 'शुच दीप्तौ (निघ० १,१७)'। अस्मात् 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २,२७)'—इत्यादिना ककारान्तादे- र-प्रत्ययो गुणाभावश्च निपात्यते। शोचते शुक्रः। यद्वा; शु ते ज्वलतिकर्मणः (निघ० १,१७) सम्पदादित्वात् (३॥ ) क्विप्। शुचि, तद्यस्य; रो मत्वर्थीयः। दीप्तमित्यर्थः। जः शब्दो वा, रेतः-पर्यायत्वात् 'देवानां वै रेतो वर्षम्' श्रुतेः उदकनामत्वमपि बोद्धव्यम्। "शुक्रासु ते शुक्रमायुनाम् ( ? )"—इति निगमः॥

* प० २, १५। निरु० ८, १२।
† ऋ० सं० ७, ७, २०, २ द्रष्टव्यः।
‡ निरु० ८, ११. १२, १७।

(९६) तेजः*। 'तेजृ पालने' भ्वादिः परस्मैपदी। असुन् (उ० ४,१८४)। तेजयति पालयति प्राणिनः पिपासादिनिवारणात्। यद्वा; 'तिज निशाने (भ्वा० आ०)' असुन्। अग्निजलादपां कार्य-कारणयोरभेदोपचारात् तेज इत्युक्तिः। निगमोऽन्वेषणीयः॥

(९७) स्वधा†। स्व-शब्द उपपदे 'डु धाञ् दानधारणयोः (जु० उ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३,२,३)'। स्वमात्मानं सर्वान्तर्यामिणं भगवन्तं नारायणं धारयति 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं‡ तेन नारायणः स्मृतः (मनुः १अ० १० श्लो०)'—इति। स्वं धनं ददातीति वा; शस्योत्पत्तिहेतुत्वात्। निगमोऽन्वेषणीयः॥

(९८) वारि। ऊर्णोतेः इण् प्रत्ययः। वार्यते तत् सेत्वादिभिः पुरुषैः। अध्वसनेये सौत्रामणी-प्रैषे—"देवं बर्हिर्वारितीनाम् (य० वा० सं० २१) य(७)"—इति निगमः। अस्य भाष्यकृदुवटः—'वारितीनामुदकवतीनां वारिप्रभवानां वा ओषधीनां सम्बन्धिनि अध्वरे ऋगार्धुमस्य। त्यादि॥

(९९) जलम्। 'जल घातने (भ्वा० प०)', 'घातनं तैक्ष्ण्यम्'—इति वृत्तिादृष्ट्या जलति शीतं भवति। यद्वा; जायत इति जः। 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डो निरुपपदादपि जनेर्भवति। जैः जायते प्राणिभिः लायते आदीयते इति जलम्। 'ला आदाने (अदा० प०)'। निगमोऽन्वेषणीयः॥

---

* प० १७।

† प० २, ७. ३, ३०। निरु० ७, २५।

‡ 'तायदस्यायनं पूर्वम्'—इति मत्पुस्तक-पाठः।

(१००) जलाषम्*। जैः जातैः लष्यते वाञ्छ्यते (भ्वा० उ०) इति जलाषम्। ज-शब्द उपपदे लषेः कर्मणि घञ्। 'जलाषं ज-लषितं जातैः'—इति माधवः। यद्वा; जलाषमिति सुखनाम, सुखहेतुत्वादपां तद्धेतौ ताच्छब्द्यम्। "रुद्रं जलाषभेषजम् (ऋ० सं० १,२,२६,४)"—इति निगमः। 'जलाषमुदकनाम वा'—इति माधवोऽभाषयत्॥

(१०१) इदम्। 'इदि परमैश्वर्ये (भ्वा० प०)', इतित्वान्नुम्। 'इन्देः कमिर्नलोपश्च (उ० ४,१५२)'—इति कमि-प्रत्ययः। देवत्वादपां परमैश्वर्यं विद्यते। 'इणो दमुग्'—इति श्रीभोजदेवः; ईयते निम्नं प्रदेशं गम्यते वा। यद्वा; इन्धेः कमिन् बाहुलकान्नलोपो धकारस्य दकारश्च। इन्धे दीप्यते इदम्। "स्वर्मारो या इदं ययुः (ऋ० सं० २,५,२६,५)"—"ता जिह्वया सदमेदं सुमेधाः (ऋ० । ५,१,१०,३)"—"रूपाभिमानो अर्क्षणोदिदन्तः (ऋ० सं० कारान्१८,३)"—इति च निगमाः॥ [illegible]द्वा;

॥ इत्येकशतमुदकनामानि (१०१)॥ १२॥

अवनयः[1]। यव्ह्यः[2]। खाः[3]। सीराः[4]। स्रोत्याः[5]। एन्यः[6]। धुनयः[7]। रुजानाः[8]। वक्षणाः[9]। [illegible]ा-अर्णाः[10]। रोधचक्राः[11]। हरितः[12]। सरि[illegible]। अग्रुवः[14]। नभन्वः[15]। वध्वः[16]। हिरण्यवर्णाः[17]।

* प० ३, ६।

(२) कातिरिक्तसर्वेष्वेव पुस्तकेषु "यव्याः"—इति, टीकाकृत्सम्मतस्य।

(१५) "नभन्वः" ख।। "नभन्वाः" C. D. F।

रोहितः[१८] । सस्रुतः[१९] । अर्णाः[२०] । सिन्धवः[२१] । कुल्याः[२२] । वर्यः[२३] । उर्व्यः[२४] । इरावत्यः[२५] । पार्वत्यः[२६] । स्रवन्त्यः[२७] । ऊर्जस्वत्यः[२८] । पयस्वत्यः[२९] । सरस्वत्यः[३०] । तरस्वत्यः[३१] । हरस्वत्यः[३२] । रोधस्वत्यः[३३] । भास्वत्यः[३४] । अजिराः[३५] । मातरः[३६] । नद्यः[३७] । इति सप्तत्रिंशन्नदीनामानि* ॥ १३ ॥

(१) अवनयः† । पृथ्वीनामसु व्याख्यातः (१) । अवन्ति जगत् स्वोदकेन, अव्यन्ते प्राणिभिस्तीरादिनिर्माणेन । "आमिन्वन्तीरवनयः समुद्रम् (ऋ० सं० ४,४,३१,१)"—"गा न व्राणा अवनीरमुचत् (ऋ० सं० १,४,२९,५)"—इति च निगमौ । निगमेषु बहुवचनान्तत्वेन प्रायशः श्रवणात् सर्वत्र बहुवचनान्तत्वम्‡ ॥

(२) यह्व्यः§ । 'या प्रापणे (अदा० प०)' । 'ग्रैवयह्वजिह्वाग्रीवाप्वामीवा (उ० १,१५२)'—इति निपातनात् व-प्रत्ययो धातोर्ह्रस्वत्वं हुगागमश्च । बाहुलकादापः स्थाने ङीप् पीप्पल्यादित्वाद् द्रष्टव्यम् । यान्ति तांस्तान् प्रदेशान् प्राप्यन्ते वा प्राणिभिः । यद्वा; 'यह्वः'—इति [illegible]न्नाम (निघ० ३,३), पूर्ववत् ङीप् । यह्व्यः महत्यो नद्यः ।

(२३) "रचकृतावर्यः"—इति माधवः । (२४) "ऊर्व्यः" c, ग ।
(२६) "वार्वत्यः" ग. C. D. E । (२७) "रेवत्यः"—इति च टीकासम्मतः ।
* "इति नदीनाम" ग । † पृ० १ ।
‡ एकवचनान्तपाठा अपि दृश्यन्ते परं ते पृथिवीवाचकाः प्रायः । तथाहि ऋक्संहितायाम्—२, २, ५, ५ अवनिं=भूमिम्, ततः १, ४, २५, ३ अर्वानः=भूमिः, ततः ३, ६, २, १ अवनिं=भूमिम् इति ; एकत्र तु अवनिः=रचकः इति व्याख्यातवांश्च सायणः १, १, ८, ५ ।
§ प० ३, ३ । निरु० ८, ८ ।

द्विधातुजं वा इदं नाम,—यातेर्क्विन्नः, पृषोदरादिः (६,३,१०९)। याताश्च प्राणिभिः हुताश्च यज्ञेष्वित्यर्थः। "स्वयमत्कैः परिदीयन्ति यह्वीः (ऋ॰ सं॰ २,७,२४,४)"—"अवर्द्धयन्त्सुभगं सप्त यह्वीः (ऋ॰ सं॰ २,८,१३,४)"—इति च निगमौ॥

केषु चित् कोशेषु "यव्याः"—इतीदं नाम दृष्टम्। 'यु मिश्रणे (अदा॰ प॰)' पृथग्भावोऽप्यस्यार्थः—इति नैगमकाण्डे 'वियुते (निरु॰ ४,२५)' इत्यस्य निर्वचने स्कन्दस्वामिना प्रतिपादितः। 'यु मिश्रणे'—इति अयं पठ्यते, प्रयुज्यते च—'जनयत्यै त्वा संयौमि'—इति, तथापि पृथग्भावेऽपि वर्त्तते। न चायं वेरुपसर्गस्यार्थः, केवलस्यापि दर्शनात्—'युतं धनमस्य', 'युतं भोजनमस्य', 'युतोऽयम्'—इति पृथग्भूत इति गम्यते'—इति। अस्मात् 'आसुयुवपिरपिलपित्रपिचमश्च (३,१,१२६)'—इति ण्यति प्राप्ते 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति 'अचो यत् (३,१,९७)', गुण, 'वान्तो यि प्रत्यये (६,१,७९)' वर्षासु मेघैरुदकेन मिश्रणीयाः, अन्येषु सूर्यरश्मिभिराकृष्टेन पृथग्भवन्तीति वा। अथवा 'युञ् बन्धने (क्र्या॰ उ॰)' अस्मात् [illegible]ग्रा- दित्वात् (उ॰ ४,१०८) यक् द्रष्टव्यः। बध्यते आसु सेतु[illegible]रिति, यव्याः। यद्वा; यवेभ्यो धान्यविशेषेभ्यो हिताः 'खलयवमाष तिल- वृषब्रह्मणश्च (५,१,७)'—इति यत्। नदीजवेनापि वर्द्धन्ते, यव्याः। "वार्ष त्वा यव्याभिः (ऋ॰ सं॰ ६,७,२,२)"—इति निगमः। 'हृद- मिव कुल्याभिः'—इति माधवभाष्यम्। अनयोर्युक्तं गृह्णन्तु सूरयः॥

(३) खाः*। 'खन अवदारणे (भ्वा॰ उ॰)', 'अन्येष्वपि दृश्यते

* निरु॰ ३, १२. १०, ९।

(३,२,१०१)'—इत्यत्र 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः (३,२,१०१भा०)'—इत्युक्ते निरुपपदादपि जनिव्यतिरिक्तादपि खने डः प्रत्ययः, टाप्। वृत्रहननादिन्द्रेण खाताः। तथा च श्रुतिः—'अपां बिल॒मपि॑हितं॒ यदासी॑द् वृ॒त्रं ज॑घ॒न्वाँ अप॒ तद्व॑वार (ऋ०सं० १,२,३८,१)'—इति, 'इन्द्रो॑ अ॒स्माँ अ॑रद॒द् वज्र॑बाहुः (ऋ०सं० ३,२,१३,१)'—इति च नदीवाक्यम्*। यद्वा; खनन्ति भूमिं वेगेन वहन्त्यः। अथ वा। 'खै दाने (?)'। 'घञर्थे क-विधानम् ३,३,५८)'–इत्यस्योपलक्षणार्थत्वात् कः, टाप्। 'खै स्थैर्ये हिंसायाञ्च (भू०प०)'—इति वा। खायन्ति स्थिरा भवन्ति वृत्रेण रुद्धाः, हिंस्यन्ते वा तेन, खाः। "सरा॒यस्खामु॑प सृ॒जा गृ॒णा॒नः (ऋ०सं० ४,७,८,४)"—"ऋ॒ध्याम॑ ते वरुण॒ खामृ॒तस्य॑ (ऋ०सं० २,७,६,५)"—इति च निगमौ॥

(४) सीराः†। 'षिञ् बन्धने' भौवादिकः क्र्यैयादिकश्च। 'शुसिचिमीनां दीर्घश्च (उ०२,२४)'—इति र-प्रत्ययः। सीयन्ते बध्यन्ते आसु सेत्वादितः शिलादिभिरवतारा वा। 'सरणात् सीरः'—इति सर्त्तेर्धातोः 'कृपृशकटिपटिशौटिभ्य ईरन् (उ०४,२९)'—इति वाऊलकाद् भवति टि-लोपश्च। 'सीरा शब्दो नदी-वचनान्तोदात्तः, हल-वचन आद्युदात्तः'—इति माधवः। "द्रवि॒त्न्वः पृथि॒व्यां सी॒रा अधि॑ (ऋ०सं०८,१,८,४)"—"सी॒रा इन्द्रः॒ सर्वि॑तवे पृथि॒व्या

---

* तथा चेय मनुक्रमणिका—'तत्र नदीवाक्यं चतुर्थी षष्ठ्यष्टमीदशम्यः'—इति तत्र चेयं षष्ठी।

† निरु० ९, ४०।

(ऋ॰सं॰ ३,६,२,३)"—इति च निगमः॥ "सीरा युञ्जन्ति कवयः (ऋ॰सं॰ ८,५,१८,४)"—इति हल-वचनः॥

(५) स्रोत्याः। स्रोतसि भवाः। 'स्रोतसो विभाषाड्यड्ड्यौ (४,४,११३)'—इति ड्य-प्रत्ययः। स्रोतोऽनुसरणाद्धि नद्यो भवन्ति। "नवति स्रोत्या नव स्रवन्ती (ऋ॰सं॰ ८,५,२५,३)"—इति निगमः॥

(६) एन्यः। 'इण गतौ (अदा॰प॰)'। 'वीज्याज्वरिभ्यो निः (उ॰ ४,४८)'—इति बाहुलकान्नि-प्रत्ययः। 'कृदिकारात्(४,१,४५ वा॰)'—इति ङीप्। यन्ति एभ्यः गमन-स्वभावा हि नद्यः गम्यन्ते वा प्राणिभिः। "वि यद् वर्त्तन्त एन्यः (ऋ॰सं॰ ४,३,१२,२)" —इति निगमः। एनी-शब्दो नदी-वचनो ऽन्तोदात्तः अन्यत्राद्युदात्त इति माधवः। "एनी त एते बृहती अभिश्रिया (ऋ॰सं॰ २,२,१३,६)"—इति अस्योदाहरणम्॥

(७) धुनयः*। 'धूञ् कम्पने' भौवादिः। बहुलानुवृत्तेः 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि (उ॰ ४,५२)'—इत्युक्ते र्नि-प्रत्ययः किच्च। धुन्वन्ति कम्पयन्ति तीरवृक्षादीनि, कम्पन्ते वा स्वयं गमनशीलत्वात्। "दिवे-दिवे धुनयो यन्त्यर्थम् (ऋ॰सं॰ २,७,१२,२)"—इति निगमः॥

(८) रुजानाः†। 'रुजो भङ्गे' तुदादिः परस्मैपदी। व्यत्ययेन शानच्, अत्र च प्रथमा-समानाधिकरणे शानच् भवति, मुगागमस्तु न क्रियते आगमानित्यत्वेन व्यत्ययेन वा। रुजन्ति कूलानि। "सं रुजानाः पिपिष इन्द्रशत्रुः (ऋ॰सं॰ १,२,३७,१)"—इति निगमः॥

---

* निरु॰ ५,२। † प॰ ४,२। निरु॰ ६,४।

(९)। वक्षणाः*। 'वक्ष रोषे (भ्वा॰प॰)'। 'क्रुधमण्डार्थेभ्यश्च (?)'—इति युच्। वक्षन्ति क्रुध्यन्तीव हि ताः वर्षासमये वेगेन गच्छन्त्यः। चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः। यद्वा; 'वह प्रापणे (भ्वा॰उ॰)'। अस्माद् 'युच् बहुलम् (उ॰२,७४)'—इति युचि षुगागमो बाहुलकाद् भवति। स्वयं प्रवहन्ति हि ताः। 'वक्षतिः प्राप्तिकर्मणः स्यात्'—इति माधवः। युच्। प्राप्यन्ते हि ताः प्राणिभिः प्राप्नुवन्ति वा समुद्रं निम्नं वा। "प्र व॒क्षणा॑ अभिनत् पर्व॑तानाम् (ऋ॰सं॰१,२,३६,१)"—"महि॒ ज्योति॒र्नि हि॑तं व॒क्षणा॑सु (ऋ॰ सं॰ ३,२,३,४)"—इति निगमौ॥

(१०) खादोअर्णाः। 'खाद भक्षणे (भ्वा॰आ॰)'। कर्त्तर्य्य-सुन् (उ॰४,१८४) अर्णशब्दोऽकारान्तोऽपि निरुक्त उदकनामसु (१२)। खादः, भक्ष्यमाणः। भक्षणेन चात्र बाधनं लक्ष्यते, तेन कूलं बाधमानोऽर्णो जलं यासामिति खादोअर्णः, वेगवज्जला इत्यर्थः। 'प्रकृत्यान्तः पादमव्यपरे (६,१,११५)'। तथा च माधवः—"धन्व-र्णसो न॒द्य॑ः खादो॑अर्णाः (ऋ॰सं॰४,२,२६,२)"—इत्यत्र 'धन्वर्णसस्तद्वज्जलाः। खादोअर्णा जलान्विताः। खादो वेगवज्जलं यासां तास्तथोक्ताः भक्षितकूलोदकाः'—इति। "धन्व॑र्णसः (ऋ॰सं॰ ४,२,२६,२)"—इत्ययं निगमः। अत्रार्णस्-शब्दो विशेषणम्, अन्यो वा निगमोऽन्वेषणीयः॥

(११) रोधचक्राः। 'रुधिर् आवरणे (रु॰प॰)', 'भावे (३,३ १८)' घञ्। 'डु कृञ् करणे (तना॰उ॰)', 'घञर्थे क-विधानम्

---

* निरु॰ १, १२।

(३,३,५८वा०)—इति कः। 'क्तादीनां के द्वे भवतः'—इति द्वित्वम्। चक्रम् करणम्, रोधः, रोधस्य निरोधस्य चक्रं करणं द्वित्वम्। चक्रम् करणम्, रोधः, रोधस्य निरोधस्य चक्रं करणं मासां विद्यते इति रोधचक्राः। नद्यो वृष्ट्या प्राणिनां स्वैर-सञ्चरणनिरोधकारिण्यः। यद्वा; रोधः तीरं, तस्य करणं निर्माण-मासां विद्यते तीरवत्यो हि नद्यः। सकारलोपश्छान्दसः। यद्वा; रुधेः करणे घञि (३,३,१९) रुध्यतेऽनेन जलप्रवाह इति रोधः शब्दः करणं निर्माणमासां विद्यते। "समुद्रं न स्रवतो रोधचक्राः (ऋ० सं० २,५,१३,२)"—इति निगमः॥

(१२) हरितः*। 'हृञ् हरणे' भ्वादिः (उ०), 'हृ प्रसह्यकरणे' जुहोत्यादिः ( ? )। 'हृसृरुहियुषिभ्य इतिः (उ० १,९४)'। हरन्ति वृक्षगुल्मादीनि वेगेन, प्रसह्य हरन्ति वा। निगमोऽन्वेषणीयः॥

(१३) सरितः। 'सृ गतौ (भ्वा० प०)'। पूर्वेण सूत्रेण (उ० १, ९४) इति-प्रत्ययः। एन्य इत्यनेन समानार्थः। "सम्यक् स्रवन्ति सरितो न धेनाः (ऋ० सं० ३,८,११,१)"—"यो वां समुद्रान्त्सरितः पिपर्त्ति (ऋ० सं० ५,५,१७,२)"—इति च निगमौ॥

(१४) अग्रुवः†। 'अगि गतौ (भ्वा० आ०)'। 'जत्र्वादयश्च (उ० ४,१००)'—इति रु-प्रत्ययान्तेषु निपातितेषु द्रष्टव्योऽयं शब्दः, निपातनान्न-लोपः, 'तन्वादीनां छन्दसि बहुलम् (६,४,८६वा०)' —इत्युवङ्। गच्छन्ति तांस्तान् प्रदेशान्। 'अग्रुवो गमनात् नद्यः'—इति माधवः। "समग्रुवो न समनेष्वञ्जन् (ऋ० सं० ५,२,१,५)"—इति निगमः॥

* पु० ६। † प० २,५।

(१५) नभन्वः । 'णभ तुभ हिंसायाम्' भ्वादिरात्मनेपदी, दिवादिः क्र्यादिश्च परस्मैपदी । 'दाभाभ्यां नुः (उ० ३,३१)'—इति बाहुलकात् नु-प्रत्यये नकार उपजनः । नभन्ते, नभ्यन्ति, नभ्नन्ति इति नभन्वः । 'जसादिषु छन्दसि वा वचनं प्राङ् णौचङ्युपधायाः'—इति विकल्पितत्वात् 'जसि च (७,३,१०९)'—इति गुणाभावः । नद्यो हि बाधिकाः कूलादीनाम् । "प्रागुवो नभन्वो३ नवक्राः (ऋ० सं० ३,६,२,२)"—इति स्त्रीलिङ्गे निगमः । "प्र पर्वतस्य नभनूँरचुच्यवुः (ऋ० सं० ४,३,२४,७)"—इति पुंल्लिङ्गे । अत्र 'सिन्धवः स्युर्नभन्वः'—इति माधवनिर्वचनानुक्रमणी* ॥

(१६) वध्वः† । 'वह प्रापणे (भ्वा० उ०) । 'वहो धश्च (उ० १, ८०)'—इति ऊ-प्रत्ययः । वहन्ति उह्यन्ते वा भूम्याम् । यद्वा ; समुद्रस्य भार्यात्वात् वध्व इत्युच्यते । सरित्पतिर्हि समुद्रः । निगमोऽन्वेषणीयः‡ ॥

(१७) हिरण्यवर्णाः । हिरण्यशब्दो निरुक्तः (१।२।१) 'हर्यतेः कन्यन् हिरश्च'-इत्यादिना । 'वृञ् वरणे (स्वा० उ०)' । 'ऋज्रेन्द्राग्र-वज्र (उ० २,२७)'—इत्यादिना रन्-प्रत्ययान्तो निपातितः । वृणोति व्रियते वाऽसाविति वर्णः श्वेतादिः । हिरण्यः कान्त इष्टो वर्णो यासां ताः । यद्वा ; हिता घर्मादौ रमणीया मनः-प्रल्हादजनयित्र्यः, वारिकाश्च तापादेर्भूम्या वा इति । "हिरण्यवर्णाः परियन्ति यह्वीः (ऋ० सं० २,७,२३,४)"—इति निगमः ॥

---

* 'भनतेः शब्दकर्मणो नभाड़ितिवत् नभनवः उदकानि'—इति च तत्रैव सायणीयव्याख्यानम् ।

† निघ० १, २ । ‡ ऋ० सं० ४, ३, १, ६ द्रष्टव्यः ।

(१८) रोहितः*। 'रुह बीजजन्मनि (भ्वा० प०)'। 'हृसृरुहि-युषिभ्य इतिः (उ० १,९४)'। रोहन्त्याभिर्बीजानि, तज्जलेन हि बीजानि प्ररोहन्ति। निगमोऽन्वेषणीयः॥

(१९) सस्रुतः। सम्पूर्वात् 'स्रु गतौ (भ्वा० प०)'—इत्यस्मात् 'क्विप् च (३,२,७६)'—इति क्विप् प्रत्ययः। सङ्गताः संस्रुतः। समोऽन्त-लोपश्छान्दसः। क्षुद्रनद्यो महानद्यश्च परस्परं सङ्गता भवन्ति ततः सस्रुत इत्युच्यन्ते। सस्रुत सङ्गता इति माधवः। यद्वा; स्रवतेः सम्पदादित्वात् (३,३,९४वा०) क्विप्। स्रवणं स्रुतजलप्रवाहः स्रोत इत्यर्थः, तया सह वर्त्तन्ते इति सस्रुतः। 'सहस्य सः सञ्ज्ञायाम् (३,६,७८)'—इति सः, सस्रुतः। 'सस्रुतः स्रोतसा युक्ताः'—इति च माधवः। "ऋतस्य धेना अयनन्त सस्रुतः (ऋ० सं० २,२,८,१)"—इति निगमः॥

(२०) अर्णाः†। 'ऋण गतौ' तनादिः (प०)। 'पचाद्यच् (३,१,१३४)'। अर्णन्ति गच्छन्त्यर्णाः। यद्वा; अर्ण इत्यकारान्तमप्युदक-नामेत्युक्तम् (१३५पृ०)। अर्श आदित्वादच् (५,२,१२७)। जल-वत्यो हि नद्यः। 'अर्त्तेरर्णास्युपगाः'—इति माधवः। तत्र पक्षे 'धापॄवस्यज्यतिभ्यो नः (उ० ३,६)'—इति न-प्रत्ययः। यद्वा; पचाद्यचि (३,१,१३४), अर्त्तेः 'उदके नुट् च (उ० ४,१९२)'—इत्यसुनि विहितो नुडागमो बाहुलकाद् भवति। "ऋणोरपो अनवद्यार्णाः (ऋ० सं० २,४, १६,२)"—इति निगमः॥

---

* प० १५. १, ५।
† निरु० ११, २७।

(२१) सिन्धवः। 'स्यन्दू प्रस्रवणे (भू० आ०)'। 'स्यन्देः सम्प्रसारणं धश्च (उ० १, ११)'—इत्यु-प्रत्ययः। स्यन्दन्ते इत्यर्थः। "अधो अच्छा सिन्धवः नेत्याभिः (ऋ० सं० ३,२,१३,४)"—"यस्य ते सप्त सिन्धवः (ऋ० सं० ५,७,२)"—इति च निगमौ॥

(२२) कुल्याः। 'कुल संस्त्याने (भ्वा० प०)'। कोलन्ति संस्त्यायन्त्यस्मिन् शिलादय इति कुलं पर्वतः। कुलप्रधान भूते पर्वते भवाः कुल्याः। 'भवे छन्दसि (४,४,११०)'—इति यत्। कुलिशनिर्वचने 'कुलशातनः (निरु० ६,१७)'। मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः, कुलाः, तेषां च शातनः इत्युक्तेः। मेघस्य पर्वतस्य वा समुच्छ्रिते प्रदेशे कुले भवन्तीति कुल्याः। क्षीरस्वामी तु 'कुलानि पर्वतानि श्यति पक्षच्छेदनेन तनूकरोति, कुलिशः'—इत्युक्तवान्। यद्वा; 'कुल्याऽल्पा कृत्रिमा सरित् (अम० १,१०,३४)'—इत्यत्र क्षीरस्वामिनो व्याख्या—'कृत्रिमा अल्पा च क्षेत्रसेकार्था कुल्या'। कुले साधुः 'तत्र साधुः (४,४,९८)'—इति यत्। यदाहुः—'कुल्यादानं जलं विद्यात् कुल्यो मान्ये व्यवस्थितः। दाम्पत्यं कुलमित्यन्ये हलं वा कुलमुच्यते'—इति। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४,४,२८,३)"—"ह्रदं कुल्या इवाऽऽशत (ऋ० सं० ३,३,९,३)"—इति च निगमौ॥

---

* निरु० ५, २७. ९, २६. १०, ५।

† "अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम्। चतुर्गवं गृहस्थानां द्विगवं ब्रह्मघातिनाम्॥"—इति हारीतः। 'षड्गवं मध्यमं हलमिति तथाविध हलद्वयेन यावती भूमिर्वाह्यते तत्कुलमिति वदति'—इति कुल्लूकः (मनुः ७, ११९)।

(२३) वर्यः । 'वृञ् वरणे (स्वा० उ०)', 'वृङ् सम्भक्तौ (क्र्या० आ०)'। 'अच इः (उ० ४,१३४)'—इति इ-प्रत्ययः, 'कृदिकारात् (४,१,४५वा०)'—इति ङीष् । वरणीयाः सम्भजनीया वा वर्यः । निगमोऽन्वेषणीयः ॥

इदं नाम माधवः "ऋतावर्यः"—इत्यपठत्। 'ऋतमित्युदकनाम (निरु० २,५२),'छन्दसी वनिपौ च (५,२,१२२वा०)'—इति मत्वर्थीयो वनिप्, 'वनो र च (४,१,७)'—इति ङीब्रेफौ, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः; ऋतावर्यः । "ऋतावरीरुप मुहूर्तमेवैः (ऋ० सं० ३,२,१२,५)"—इति निगमः॥ अत्र स्कन्दस्वामिना 'नदीनाम'—इति नोक्तम्, युक्तं गृह्णन्तु सूरयः ॥

(२४) उर्व्यः* । 'ऊर्णुञ् आच्छादने (अदा० उ०)'—इत्यस्माद् वृणोतेश्च । उर्वी इति पृथिवीनामसु व्याख्यातम् (१,१,१०) । महत्यो नद्यः, छादयित्र्यो वा भूमेः स्वेनोदकेन ॥

एतदादीनामुत्तरेषां नाम्नां निगमा अन्वेषणीयाः प्रायेण ॥

(२५) इरावत्यः† । 'इण गतौ (अदा० प०)'। 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २,२७)'—इत्यादिना र-प्रत्ययो गुणाभावो निपात्यते । इरा बलं, तदासामस्ति मतुप्, वत्वं, ङीष् ॥

(२६) पार्वत्यः । पर्वतशब्दो निरुक्तो मेघपर्वतानां नामत्वेन (१,१०,९) । 'तस्यापत्यम् (४,१,९२)'—इत्यण्, ङीष् (४,१,१५) ॥

(२७) स्रवन्त्यः । 'स्रु गतौ (भ्वा० प०)', । लट्, शतृतो ङीप् ।

---

* पृ० १। † ऋ० सं० ४, ४, ७, २ निगमोऽस्य द्रष्टव्यः ।

सर्वदा गमनस्वभावः । "नवतिं स्रोत्या नव च स्रवन्तीः (ऋ० सं० ८,५,२५,३)"–इति निगमः । अत्र स्रोत्या इति विशेषणम् ॥ •

अस्य स्थाने "रेवत्यः"—इति केषुचित् कोशेषु दृश्यते । तदा ; 'रयिः'—इत्युदकनाम (१२,७३)। रयिरासामस्तीति मतुप्, 'रये-र्मतौ बहुलम् (६,१,३४वा०)'—इति सम्प्रसारणम्। "पतिः सिन्धूनामसि रेवतीनाम् (ऋ० सं० ८,८,३८,१)"–इति निगमः । सिन्धुशब्दो विशेषणम्॥

(२८) ऊर्जस्वत्यः* । 'ऊर्ज बलप्राणनयोः' चुरादिः (प०) । असुन् (उ० ४,१८४)। ऊर्जयतीत्यूर्जो बलं तेन तद्वत्यः । 'अस्मा-यामेधास्रजो विनिः (५,२,१२१)'—'बहुलञ्छन्दसि (५,२, १२२)'–इत्युक्ते मतुप्,'तसौ मत्वर्थे (१,४,१९)'—इति भ-सञ्ज्ञा। बलवत्यो हि नद्यः यतः स्ववेगेन स्थिरानपि वृक्षादीन् हरन्ति । 'ओजसा वा एता वहन्ती रिवोद्दती रिव आकूलन्ती रिव धावन्ती रिव ( ? )'—इति श्रुतिः ॥

(२९) पयस्वत्यः† । 'पा पाने (भ्रू० प०)' । पिबतेरौ चासुन् (६,४,६६ । उ० ४,१८४)। पीयत इति पयः । प्यायतेर्वा (भ्रू० आ०) असुनि बाहुलकात् ; 'प्यायः पी (६,१,२८)'—इति निष्ठायां विहितः पी-भावो भवति । वर्द्धतेऽनेन पीतेन प्राणिन इति पयः । उदकं तद्वत्यः‡ ॥

---

* निघ० ८, २२ । † पु० ७ ।

‡ निगमस्त्वस्य ऋ०सं० ५, १, १४, २ द्रष्टव्यः ।

(३०) सरस्वत्यः*। सर इत्युदकनाम्नि निरुक्तम् (१२,३८) ; तद्वत्यः सरस्वत्यः† ॥

(३१) तरस्वत्यः । 'तॄ प्लवनतरणयोः (भ्वा०प०)' । असुन् (उ० ४,१८४) । तरन्त्यनेनापदमिति तरो बलं, तद्वत्यः ॥

(३२) हरस्वत्यः। 'हृञ् हरणे (भ्वा०उ०)'। असुन् (उ०४, १८४)। 'उदकं हर उच्यते'—इति निरुक्तम् (४,१९) ; तद्धि बहवो हरन्ति, सर्वं ह्रियते वा प्राणिभिरुपभोगाय, तद्वत्यः‡ ॥

(३३) रोधस्वत्यः । रोधसा तीरेण, तद्वत्यः। "चित्रा रोधस्वतीरनु (ऋ०सं०१,३,१७,१)"—इति निगमः ॥

(३४) भास्वत्यः§।'भा दीप्तौ (अदा०प०)'। असुन् (उ०४, १८४ । भा दीप्तिः, तद्वत्यः ; दीप्तिमत्यो हि नद्यः ॥

(३५) अजिराः‖ । 'अज गतिक्षेपणयोः (भ्वा०प०)'। 'अजिर-शिशिर-शिथिल-स्थिर-स्फिर-स्थविर-खदिराः (उ०१,५३)'—इति किरच्-प्रत्ययो वी-भावाभावश्च निपात्यते। अजन्ति गच्छन्ति क्षिप्यन्ते प्रेर्यन्ते आसु नाव इति। यद्वा ; 'अजिरम्'—इति क्षिप्रनाम (निघ० २,१५), अजिराः शीघ्रगाः ॥

(३६) मातरः¶ । 'माङ् माने (अदा०आ०)'। तृन्-तृचौ, 'शंसिक्षदादिभ्यः सञ्ज्ञायां तृन्-तृचौ** (उ०२,८७)'—इति वच-

---

* पृ० ११ । † निगमस्त्वस्य ऋ०सं०४, ८, २०, २ द्रष्टव्यः ।

‡ निगमस्त्वस्य ऋ० सं० २, ६, २०, १ द्रष्टव्यः ।

§ पृ० ८ ।

‖ प० २, १५ ।

¶ निरु० २, ८. ४, १९. ८, १८. १२, ७ ।

** 'तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ'—इति कौ० पाठः ।

नात्। 'न षट्स्वस्रादिभ्यः (४.१,१०)'—इति ङीप्-प्रतिषेधः । निर्मीयते प्रजापतिना, मान्ति आसु आप इति वा, मातृवल्लोकस्य रचिका इति वा ; नदीमातृक इति हि देशस्य व्यपदेशः* । "जज्ञानं सप्तमातरः (ऋ०सं० ७,५,४,४)"–"द्वितीयमा सप्तशिवासु मातृषु (ऋ०सं० २,२,८,२)"—इति च निगमौ ॥

(३७) नद्यः† । 'णद अव्यक्ते शब्दे (भ्वा०प०)' । पचाद्यच् (३,१,१३४) । तत्र च 'नदट्'—इति टिदयं पठ्यते (४,१,१५भा०), ततो ङीप् । नदन्ति नद्यः । * * * । "सो अर्णवो न नद्यः समुद्रियः (ऋ०सं० १,४,१९,२)"—"प्रतीपं शापं नद्यो वहन्ति (ऋ०सं० ७,७,२०,४)"—इति च निगमौ ॥

॥ इति सप्तत्रिंशन्नदीनामानि ॥ १३ ॥

**अत्यः(१) । हयः(२) । अर्वा(३) । वाजी(४) । सप्तिः(५) । वह्निः(६) । दधिक्राः(७) । दधिक्रावा(८) । एतग्वा(९) । एतशः(१०) । पैद्वः(११) । दौर्गहः(१२) । औच्चैःश्रवसः(१३) । तार्क्ष्यः(१४) । आशुः(१५) । ब्रध्नः(१६) । अरुषः(१७) । मांश्चत्वः(१८) । अव्यथयः(१९) । श्येनासः(२०) । सुपर्णाः(२१) ।**

---

* "देशो नद्यम्बु-वृष्ट्यम्बु-सम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्"—इति अम० को० २, १, १२ ।

† प० ५, ३ । निरु० २, २४. ९, २५. ११, ४९ ।

(९) "एतग्वः" क-ग-व्यतिरिक्तेषु । ऋ० सं० १, ८, ७, ३—इति च तस्य निगमः

(१३) कातिरिक्तेषु सर्वत्र "औच्चैश्रवसः" इति ।

(१८) "माःश्वत्वः" ग । "मांश्चत्वः" ङ, अस्त्येवमपि निगमः ऋ० सं० ७, ४, २१, ३ । ऋ० सं० ५, ४, ११, ३ इत्यस्यावग्रहे—"मंश्चतोः"—इति पदकारसम्मतः, "मंश्चतुः"—इति माधवस्य च ।

(१९) "व्यथयः" C. D. F । (२०) "श्येनासः" ख ।

**पतङ्गाः[22]। नरः[23]। ह्वार्याणाम्[24]। हंसासः[25]। अश्वाः[26]। इति षड्विंशतिरश्वनामानि* ॥ १४ ॥**

(१) अत्यः†। 'अत सातत्यगमने (भू० प०)'। 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्त्तरि यत्। अथ वा 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत् प्रत्ययो द्रष्टव्यः। अतति सततं गच्छति, गच्छत्यनेनाश्वारोह इति वा। "वामत्या अपि कर्णे वहन्तु (ऋ० सं० ४,१,३०,४)"—इति निगमः॥

(२) हयः। 'हय गतिविक्रान्ते (भू० प०)'। पचाद्यच् (३,१,१३४)। हयति गच्छत्यध्वानं, विक्रमते वा। 'अश्वादीनां गतिविशेषो विक्रमणम्'—इति वृत्तिः। "हयो न विद्वाँ अयुजि स्वयं, धुरि (ऋ० सं० ४,२,२८,१)"—"हयोसि (ता० ब्रा० १,१,७)"—इति च निगमौ॥

(३) अर्वा‡। 'ऋ गतिप्रापणयोः (भू० प०)'। 'स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् (उ० ४,१०९)'-इति वनिप् प्रत्ययः। गच्छत्यध्वानं प्रापयत्यध्वनः पारमिति वा। 'अर्वैररणवान् (निरु० १०,३१)'—इति भाष्ये स्कन्दस्वामी। भाष्ये तु अर्वैररणवान् इत्यर्थप्राप्तवचनं द्रष्टव्यम्। अर्त्तेरन्तर्णीतण्यर्थाद्वा 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिनि रूपम्। प्रेर्यते कशादिना प्रतिक्षणं पार्ष्ण्यादिनेति वा। यद्वा; * * * अन्यमाश्रितः अस्वतन्त्र इत्यर्थः अश्वो ह्यारोहि-

(२४) "वार्याणाम्" ग. iid।
* "इत्यश्वानाम्" ग।
† निरु० ४, १३।
‡ निरु० १०, ३१।

परतन्त्वः । "इन्द्रो वन्वन् क्रत्वा नार्वा (ऋ०सं४,५,१४,४)"—इति निगमः ॥

(४) वाजी* । 'वज गतौ (भ्वा०प०)'। घञ्। वाजो वेगः । 'रंहस्तरणिः प्रसभो वेगो रयो जवो वाजः'—इति निघण्टुः(?)। 'अजिव्रज्योश्च (७,३,६०)'—इत्यत्र न्यासः—'चकारस्यानुक्तसमुच्चयार्थत्वाद् वजेरपि कुत्वप्रतिषेधसिद्धे भवति वाजः वाज्यम्'—इति । वाजोऽस्यास्ति 'अत इनिठनौ (५,२,११५)' वाजी । वेगवान् ह्यश्वः । यद्वा; वाजोऽन्नं, देवतात्वे हविर्लक्षणेन, अश्वजातीयत्वे तज्जात्युचितमुद्गाद्यन्नेन तद्वान्। 'वाजाः पक्षाः अभूवन्नस्येति वाजी'—इति क्षीरस्वामी । वेजनवान् वा । वेजनं कम्पनं कम्पितः स्वयं, कम्पयिता वा परेषा मित्यर्थः । अत्र 'ओ विजी भयचलनयोः (रु०प०)'—इत्यस्माद् वाजशब्दः पृषोदरादित्वात् सिद्धः । "विमोचनं वाजिनो रासभस्य (ऋ०सं० ३,३,१९,५)"—इति निगमः ॥

(५) सप्तिः† । 'षप समवाये (भ्वा०प०)। 'सपिनसिवसिपदिभ्यस्तिप्'—इति श्रीभोजदेवः । सपति सङ्ग्रामेषु सहसामेवेति । गति-कर्मणो वा सप्तिः । 'सपतेः स्पर्शार्थात्'—इति माधवः । 'सृप्लृ गतौ (भ्वा०प०)'—अस्माद्वा ति-प्रत्यये गुणे च रेफलोपो बाहुलकात्, सर्पति सप्तिः । "जुषाण इन्द्र सप्तिभिर्न आ गहि (ऋ०सं० ६,१,९,३)"—इति निगमः ॥

(६) वह्निः‡ । 'वह प्रापणे (भ्वा०उ०)' । 'वहिश्रिश्रुयुद्रुग्लाहा-

---

* पृ० ८।

† निघ० ९, २।

‡ निघ० २, ४; ६. ८, ३।

त्वरिभ्यो नित् (उ० ४,५१)'—इति नि-प्रत्ययः। "ये त्वा वहन्ति वह्नयः (ऋ० सं० १,१,२६,६)"—इति निगमः॥

(७) दधिक्राः*। 'तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा (निरु० २,२७)'—इत्यत्र स्कन्दस्वामी—'दधिक्राः; दधत् धारयत् स्वारोहिणं क्रामति; दधत् क्रन्दति हर्षार्थं ह्रेषारवं करोति; दधदित्याकारी भवति अधिष्ठितम्; ईषदवनत-मध्यभागः, उद्धूत-कन्धरः, कुञ्चितघोणः, स्तिमित-चक्षुः, कर्णशुक्तिकाकारो भवति'—इति। सर्वत्र दधच्छब्दः पूर्वपदं तस्य पृषोदरादित्वात् (६,३,१०९) तकारलोप इकारान्तादेशश्च। क्रामतेः क्रन्दते राङ्पूर्वात् करोतेर्वोत्तरपदं, तत्र, क्रामतेः 'जनसन-खनक्रमगमो विट् (३,२,६७)'—इति विट्, 'विड्वनोरनुनासिकस्यात् (६,४,४१)'—इत्यात्वम्। क्रन्देः 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति विच्, व्यत्ययेनानुनासिकस्यात्वं, दकारलोपश्च पृषोदरादित्वेन करोतेः क्विप् युक् चानुवर्त्तते। आङ् च धातोः परो यणादेशः; दधिक्राः। "क्रतुं दधिक्रा अनु सन्तवीत्वत् (ऋ० सं० ३,७,१४,४)"—इति निगमः॥

(८) दधिक्रावा। अत्र 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिप्। अन्यत्सर्वं पूर्वेण समानम् अर्थश्च। "दधिक्रावेषमूर्जं स्वर्जनत् (ऋ० सं० ३,७,१४,२)"—इति निगमः॥

(९) एतग्वा। 'इण् गतौ (अदा० प०)'। 'हसिमृग्रिण्वामिद-मिलूपूधूर्विभ्यस्तन् (उ० ३,८३)'—इति तन् प्रत्ययः कर्मणि।

* प० ५, ४। निरु० २, २७; २८. १०, ३०।

'भूतेऽपि दृश्यन्ते (३,३,२)'—इत्युक्तः भूतेऽपि भवन्ति। एतं प्राप्तम्। 'गम्लृ गतौ (भ्०प०)', 'इण्शीभ्यां वन् (उ० १,१५०)' —इति बाहुलकाद् वन् प्रत्ययः टि-लोपश्च। गम्यत इति ग्वः गन्तव्यो देशः। एतः प्राप्तो गन्तव्यो येन स एतग्वः। अश्वस्तु शैघ्रातिशयेन गमनारम्भ एवाविलम्बितं गन्तव्यदेशं प्राप्नोतीति एत उच्यते। 'एतग्वाः प्राप्तगन्तव्याः'—इति माधवः। यद्वा; एतशब्दः शुक्लपर्यायः, गमेः क्विप्, 'गमः क्वौ (६,४,४०)'—इत्यनुनासिकलोपः, 'ऊङ् च गमादीनाम् (६,४,४०वा०)'—इत्युकारोऽन्तादेशः। आगमनमागूः। धातूपसर्गयोः स्थानविपर्ययः प्राप्तः। एतस्य शुक्लवर्णस्यागमनमस्यास्ति मत्वर्थीयस्य लुक्। एतग्वाः शुक्लवर्णा अश्वाः। यद्वा; एतः शुक्लवर्णोऽस्यास्तीति 'केशाद्वोऽन्यतरस्याम् (५,२,१०९)'—'अन्येभ्योऽपि दृश्यते (५,२,१०९वा०)'—इति व-प्रत्ययः, गकारउपजनः। 'एतस्य श्वेतवर्णस्य ग्वो मत्वर्थीयो भवति'—इति माधवः। सर्वेषामश्वानां यत्र क्वापि शौक्ल्यमस्ति रूपेण वा। एतग्वा-शब्दोऽश्वे वर्त्तते। तथाच 'विशाखाषाढौ मन्थदण्डयोः ( ? )'—इत्यत्र पदमञ्जरी—'विशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्त्तेते, तेन यथाकथञ्चिच्छाधुत्वानुशासनार्थं व्युत्पत्तिः क्रियते'—इति। तेनामत्वर्थेऽपि न दोषः। 'एतग्वा'—इत्याकारान्तपाठो यथादृष्टम्। "एतग्वा चिन्न सुयुजा युजानः (ऋ०सं० ५,५,१७,२)"—"एतग्वा चिद्य एतशा युयोजते (ऋ०सं० ६,५,९,२)"—इति च निगमादौ 'सुपां सुलुग् (७,१,३९)'—इति विभक्तेराकारः॥

(१०) एतशः। 'इण् गतौ (अदा०प०)'। 'इणस्तशन्तशसुनौ

(उ० ३,१४५)'—इति तशन्-प्रत्ययः। एतशः गमनकुशलः। यद्वा; एत-शब्दात् लोमादित्वात् (५,२,१००) शस्*। एतद्वा एतच्छरीर एतशः; पृषोदरादित्वात् (६,३,१०९) सर्वसिद्धिः। "एतशो वहति धूर्षु युक्तः (ऋ० सं० ५,५,५,२)"—"यदेतशेभिः पतरै रथर्यसि (ऋ० सं० ७,८,१२,३)"—इति च निगमौ॥

(११) पैद्वः। 'पद गतौ (दि० आ०)'। 'कॄगृशॄदृभ्यो वः (उ० १,१५३)' इति व-प्रत्ययो बाहुलकात्, अकारस्यैकारः पृषोदरादित्वात् (६,३,१०९)। पद्यते गच्छति पद्यतेऽनेनेति वा। 'पदेः पैद्वो गतिक्रियायाम्'—इति माधवः। "पैद्वो न हि त्व महिनाम्नां हन्ता (ऋ० सं० ७,३,२४,४)"—इति निगमः॥

(१२) दौर्गहः। दुर्-शब्दे उपपदे गहातेः (क्र्या० उ०) गाहेर्वा (भ्वा० आ०) 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् (३,३,१२६), पृषोदरादित्वात् (६,३,१०९) गहातेः रेफलोपः, गाहेर्ह्रस्वत्वम्। अश्व हृदयानभिज्ञैर्गहीतु मशक्यत्वात् दुर्गह इत्युच्यते। दुर्गह एव दौर्गहः, प्रज्ञादित्वादण् (५,४,३८)*। यद्वा; 'दुःखेन गहितव्यत्वात् दुर्गाहं जलमुच्यते'—इति माधवः, तत्र भवो दौर्गहः, 'तत्र भवः (४,३,५३)'—इत्यण्; 'अप्सु योनिर्वा अश्वः(शत० ब्रा० ५,४,४,४)'—इति श्रुतिः। "सप्तऋषयो दौर्गहे बध्यमाने (ऋ० सं० ३,७,१८,२)"—इति निगमः॥

(१३) औच्चैःश्रवसः। अमृतमन्थने जातोऽश्व उच्चैःश्रवाः। उच्चैर्महच्छ्रवः कीर्त्तिरस्येति, 'तस्यापत्यम् (४,१,९२)'—इत्यण्। तत्कुलीना ह्यश्वाः सर्वे। निगमोऽन्वेषणीयः†॥

---

* गणपाठे तु नवात्मके लोमादिगणे न दृश्यते एतशब्दः।

† "प्रति धावन्तं हर्यो रौच्चैःश्रवसमब्रुवन्"—इति अथ० सं० २०,१२८,१५ द्रष्टव्यः।

(१४) तार्च्यः* । तूर्णमश्नुते गन्तव्यं, तीर्णे अन्तरिक्षे क्षियतीति तार्च्यः । तूर्ण-शब्दात् तीर्ण-शब्दाद्वा पूर्वपदम्, अश्नोतेः क्षीयते र्वोत्तरपदम्; पृषोदरादिः (६,३,१०९)। अश्वो हि वेगवशादाकाशे गच्छन्निव हि दृश्यते प्रेक्षकैः । यद्वा; वेगेन तार्च्यसादृश्यात्† तार्च्य इत्युच्यते। 'तुरङ्गगरुडौ तार्च्यौ (अम०को०३,३,१४५)'—इत्यत्र तृचस्यापत्यं तार्च्यः, गर्गादित्वात्'—इति क्षीरस्वामी । निगमोऽन्वेषणीयः‡ ॥

(१५) आशुः§ । 'अशू व्याप्तौ (स्वा०आ०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ०१,१)' । अश्नुतेऽध्वानम् । अश्नातेर्वा बाहुलकादुण् (३,३,१) । अश्नाति महाशनो भवति । आशुरिति क्षिप्रनाम (निघ०२,१५), शीघ्रो वा । "द्रवच्चक्रेष्वाशुषु (ऋ० सं० ६,३,१३,८)"—इति निगमः ॥

(१६) ब्रध्नः‖ । अत्र भास्करमिश्रेण—'ब्रध्नम् परिवृढम्, अरुषमारोचनम्'—इति व्याख्यातम्। वाजसनेये तु,—"युञ्जन्ति ब्रध्नमरुषञ्चरन्तम् (ऋ०सं०१,१,११,१)"—इत्यत्र, उवटः—'अश्वं युञ्जन्ति ब्रध्नमिति, अश्वोऽन्नादिवत् स्तूयत इति वा' ॥

(१७) अरुषः¶ । 'ऋ गतिप्रापणयोः (क्या०प०)'। ऋणाति अभ्यासुखं गच्छति, अर्यते वा तदर्थिभिः । यद्वा; अरुषमिति रूपनाम (निघ०३,७), मत्वर्थीयोऽकारः, प्रशस्तरूप इत्यर्थः । "हरिं मृजन्त्यरुषो न युज्यते (ऋ०सं०७,२,२७,१)"—इति निगमः ॥

---

* प० ५, ४ । निरु० १०, २७ । † तार्च्यौ वायुः (निरु० १०, २८ ) ।
‡ 'त्यमू षु ८, ८, २६, १)'—इत्येष ह्यस्यापि निगमो भवितुमर्हति ।
§ प० २, १५ । निरु० ६, १. ९, ९ ।
‖ प० ३, ३ । ¶ पु० ८ ।

20

(१८) मांश्चत्वः। 'मन ज्ञाने (दि०आ०)'। पदस्य न-लोपाभावः पृषोदरादित्वात् (६,३,१०९)। "महीमे अस्य वृषनाम शूषे मांश्चत्वे वा पृश्ने वा वधत्रे (ऋ०सं०७,४,२१,४)"—इत्यत्र, माधवस्य प्रथमभाष्यम्—'मही महती, इमे, अस्य सोमस्य, शूषे सुखकरे भवतः। ये च कर्मणी मांश्चत्वे। अश्वनामैतत्। मक्षु चरतीति। अश्वैः क्रियमाणे युद्धे वाक्युद्धे, वधत्रे शत्रूणां हिंसनशीले भवतः। सोऽयं अस्वापयच्छत्रून्त्स्नेहयच्च। स्नेहनं प्रद्रावणम्। अथ प्रत्यक्षकृतः'—इत्यादि। अत्र मांश्चत्वस्य * * *। समाम्नायपाठेषु* मंश्चत्व इति दृश्यते। 'ब्रध्नं मांश्चतोर्वरुणस्य बभ्रुम् (ऋ० सं० ५,४,११,३)'—इत्यत्र माधवः—'मंश्चतु रित्यश्वनाम * * *। इह तु वरुणविशेषणम्' मंश्चतोर्वरुणस्य महान्तं बभ्रुम्'—इत्यभाषयत्†; निरूपणीयम्॥

(१९) अव्यथयः‡। एषामष्टावुत्तराणि बहुवदित्युक्तम् (निरु० २,२४७)', असन्देहार्थमेतदादीनि बहुवचनान्तानि नामानि। 'व्यथ भयचलनयोः (भ्वा०आ०)'। 'इन् सर्वधातुभ्यः (उ०४,११४)'—इतीन् प्रत्ययः, नञ्-समासः। न व्यथन्त्यभि सङ्ग्रामेषु अव्यथयः दृष्टे भयेऽप्यव्यथः स्यादिति भावः। यद्वा; व्यथिरिति क्रोधनाम (निघ० २,१३), आरोहण-ताडन-बन्धनादिभिर्न क्रुध्यन्तीत्यर्थः। "पतत्रिभिरश्रमैरव्यथिभिः (ऋ०सं०५,५,१६,७)"—इति निगमः॥

---

* निरुक्तसमाम्नायपाठेषु अत्याद्यश्वनामसु इत्यर्थः।

† संहितापाठे 'मांश्चतोः'—इत्येव, पदपाठे तु 'मंश्चतोः'—इति, व्याख्याकालेऽपीह 'मंश्चतोः'—इत्येव प्रतीकमवलम्बितमिति ध्येयम्।

‡ न एवमेव पङ्क्तिर्यास्कस्य।

(२०) श्येनासः*। 'श्येनः शंसनीयं गच्छति (निरु० ४,२४)'—इति भाष्ये। जसि 'आज्जसेरसुक् (७,१,५०)'। "श्येनासो न दुवसनासो अर्थम् (ऋ० सं० ३,५,५,५)"—इति निगमः॥

(२१) सुपर्णाः†। 'पॄ पालनपूरणयोः (जु० प०)'। 'धापॄवस्यज्यतिभ्यो नः (उ० ३,६)'—इति न-प्रत्ययः। सुपाल्यन्ते यवसादिप्रदानेन, पूरयन्ति वा नभः ह्रेषारवादिना सङ्ग्रामसाधनत्वात्। पतते र्वा बाहुलकात् न-प्रत्ययस्तकारस्य रेफ', शोभनगमना इत्यर्थः। निगमोऽन्वेषणीयः॥

(२२) पतङ्गाः। 'पत्लृ गतौ (भू० प०)'। 'पतेरङ्गच् (उ० १,११७)'। यद्वा; * * * खच्-प्रकरणे 'गमेस्तु खच्युपसङ्ख्यानम्‡ (३,२,६८वा०)'—इति खच्, खच्च डिद्वा वक्तव्यः (३,२,६८वा०), 'खित्यनव्ययस्य (६,३,६६)'—इति मुम् पतङ्गा इति। 'अश्वाः पूर्वं पक्षिणो भूवन्'—इति श्रूयते। "रथे युक्तास आशवः पतङ्गाः (ऋ० सं० १,८,१८,४)"—इति निगमः। आशुशब्दो विशेषणम्॥

(२३) नरः§। 'णीञ् प्रापणे (भू० उ०)'। 'नयते र्डिच्च (उ० २,९३)'—इति ऋन् प्रत्ययः। जसि नरः। नयन्ति आरोहिणम्, कर्मणां नेतारो वा नरः। "त्वं सूरो हरितो रामयो नॄन् (ऋ० सं० १,८,२६,३)"—इति निगमः। 'नॄन् अश्वान्'—इति माधवः॥

(२४) ह्वार्याणाम्। 'ह्वृ कौटिल्ये (भू० प०)'। 'ऋहलोर्ण्यत् (३,१,१२४)'। खलीनाद्याकर्षणे मुखादिष्वङ्गेषु कुटिलीक्रियन्ते ह्यश्वाः।

* प० ५, ५। निरु० ४, २४. ११, १। † पु० ५।
‡ वार्त्तिकस्वरूपन्तु 'गमेः सुपि वाच्यः'—इति।
§ प० २, ३। निरु० ५, १।

यद्वा; क्रतिरत्तिकर्मा (निघ० २,८), 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति एतत्। क्रत्यर्थम् अस्याः क्रार्याः। 'क्रि गतौ'—इति माधवः। "क्रार्याणाम्"—इति यथादृष्टपाठः। "पुत्रो न क्रार्याणाम् (ऋ० सं० ४,१,१,४)"—इति निगमः॥

(२५) हंसासः*। 'हन हिंसागत्योः (अदा० प०)'। 'वृतृवदि-हनिकमिकषि-(युध्यवि)-भ्यः सः (उ० ३,५९)'—इति स-प्रत्ययः। घ्नन्ति गच्छन्त्यध्वानं, गच्छन्तः पद्भिरध्वानं हिंसन्ति वा (ऐ० ब्रा० ५,१,१)। "हंसासो ये वां मधुमन्तो अस्रिधः (ऋ० सं० ३,७,२१,४)"—इति निगमः॥

(२६) अश्वाः†। 'अशू व्याप्तौ (स्वा० आ०)'। 'अशूप्रुषिलटि-कणिखटिविशिभ्यः क्वन् (उ० १,१४९)'—इति क्वन् प्रत्ययः। अश्नातेर्वा बाहुलकात्। अश्नुवतेऽध्वानं महाशना भवन्तीति च। * * *। "यदाक्रिषुर्दिव्यमज्ममश्वाः (ऋ० सं० २,३,१२,५)"—इति निगमः॥

॥ इति षड्विंशतिरश्वनामानि ॥ १४ ॥

'दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय (निरु० २,२८)'—इतिहासपक्षेऽपि पूर्वपक्षापरपक्षावहोरात्रे वा॥

**हरी इन्द्रस्य(१)। रोहितोऽग्नेः(२)। हरित आदित्यस्य(३)। रासभावश्विनोः(४)। अजाः पूष्णः(५)। पृषत्यो मरुताम्(६)। अरुण्यो गाव उषसः(७)। श्यावाः सवितुः(८)।**

---

* निरु० ४, १२। † प० ५, २। निरु०१,१२. २, २७. ९, १।

(७) "अरुणो गाव उषसाम्"—इति कातिरिक्तेषु सर्वत्रैव, परं छन्दसाभिहत-व्याख्याविरुद्धः।

विश्वरूपा बृहस्पतेः(९)। नियुतो वायोः(१०)। इति दशाऽऽदिष्टोपयोजनानि* ॥ १५ ॥

"(१) हरी इन्द्रस्य। सोमपानादिक्रियायाः साधनत्वात् ॥

(२) रोहितोऽग्नेः। नित्यपक्षे ज्वाला अग्ना व्याप्तिमत्यः ॥

(३) हरित आदित्यस्य । हरितवर्णा रश्मयः प्रातरादित्यस्य ॥

(४) रासभावश्विनोः । अश्विभोगकाले रासभवर्णौ, तत्कालोचितेन श्यामत्वेन वर्णनायं व्यपदेशः ॥

(५) अजाः पूष्णः। अजा अजनात्। पूष्णः काले रश्मयो गच्छन्ति॥

(६) पृषत्यो मरुताम्। प्रावृषि सर्वतः पृषत्यो विचित्रा मेघमाला मरुताम्॥

(७) अरुण्यो गाव उषसः। उषसः काले तमोऽभिभवे अरुणिमाया मागन्त्वः ॥

(८) श्यावाः सवितुः । सवितुः काले श्यामवर्णा भवन्ति ॥

(९) विश्वरूपा बृहस्पतेः। 'छन्दांसि वै विश्वरूपाणि (शत० ब्रा० ८,४)'—इति श्रुतेः ॥

(१०) नियुतो वायोः। अप्-प्रवृत्तौ तृणपर्णानामवादेः सञ्चरणान्मिश्रणान्नियुतः ॥"—इति स्कन्दस्वामिग्रन्थाः ॥

शब्दव्युत्पत्तिस्तावत् प्रदर्श्यते—

(१) हरी†। 'हृञ् हरणे (भ्वा० उ०)'। 'हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्च (उ० ४,११५)'—इतीन्-प्रत्ययः। हरतो रथम्।

* "इत्यादिष्टोपयोजनानि" ग।

† प० २, ३। निघ० ४, १९. ७, २४।

अत्र ताण्ड्यकम्*—'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां हीदं सर्वं हरति (६,१,१)'—इति; अस्मिन् पक्षे करणे इन्। 'ऋक्सामे वा इन्द्रस्य हरी'—इत्यैतरेयब्राह्मणम् (२,३,६)। 'ऋक्सामे वै हरी' —इति यजुर्ब्राह्मणम्† (४,४,३६)। "इन्द्रो॒ हरी॑ युयु॒जे अ॒श्विना॒ रथ॑म् (ऋ० सं० २,३,५,१)"—इति निगमः॥

(२) रोहितः‡। 'रुहरुहियुषिभ्य इतिः (उ० १,९४)'—इति इति-प्रत्ययः। रोहन्ति आरोहन्ति रथं वहन्त्यादिवमिति रोहितः। "रोहि॑दश्व शुचिव्रत (ऋ० सं० ६,३,२२,१)"—इति निगमः॥

(३) हरितः§। पूर्ववत् इतिः (उ० १,९४)। हरन्ति रथं तमो वा स्वभासा। यद्वा; हरिच्छब्दः पीतवर्णवचनो हरिद्वर्णो वा। "य॒देत॑दयु॑क्त ह॒रितः॑ स॒धस्था॑त् (ऋ० सं० १,८,७,४)"—इति निगमः॥

(४) रासभौ। 'रासृ शब्दे (भ्वा० आ०)'। 'रासिवल्लिभ्याश्च (उ० ३,१२१)'—इत्यभच्-प्रत्ययः। रासते शब्दं करोतीति रासभः, तौ रासभौ। 'गर्दभरथेनाश्विना उदजयताम्'—इति ब्राह्मणम् (ऐ० ब्रा० ४,२,३)। "यु॒ञ्जाथां॒ रास॑भं॒ रथे॑ (ऋ० सं० ६,६,८,२)"—"तद्रास॑भो नासत्या स॒हस्र॑माजा (ऋ० सं० १,८,८,२)"—इति च निगमौ॥

(५) अजाः‖। 'अज गतिक्षेपणयोः (भ्वा० प०)'। पचाद्यच् (३,१,१३४)। वीभावाभावो व्यत्ययेन। अजन्ति गच्छन्ति सर्वतः क्षिपन्ति वा तमः। "अहे॑ळमानो र॒रिवाँ॑ अजाश्व॒ श्र॑वस्य॒तामजाश्व (ऋ० सं० २,२,२,४)"—इति निगमः॥

---

* सामवेदाद्यब्राह्मणानामादिमम्। † शतपथाभिधानमिति यावत्।
‡ पृ० १२। § पृ० ६। ‖ निरु० ४, २५. ६, ४।

(६) पृषत्यः । 'पृषु वृषु सेचने (भू०प०)' । 'वर्त्तमाने पृषन्महत् (६,४,३०वा०)'—इत्यादिना सिद्धम् । 'पृषत्यः सह सङ्गताः'—इति माधवः। तदा 'पुंयोगादाख्यायाम् (४,१,४८)'—इति ङीष् । "उपो रथेषु पृषतीरयुग्ध्वम् (ऋ०सं० १,३,१९,१)"—इति निगमः ॥

(७) गावः* । व्याख्याता रश्मिनामसु (१,५,३) । गन्तारः । "युङ्क्ते गवा मरुणानामनीकम्(ऋ०सं० २,१,९,१)"—इति निगमः॥

(८) श्यावाः† । 'श्यैङ् गतौ (भू०आ०)' । 'कृगशृदृभ्यो वः (उ० १,१५३)'—इति बाहुलकाद् व-प्रत्ययः । श्यावो धूमरारुणो वर्णः, तद्वन्तोऽपि श्यावाः; 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः (१,४,१९वा०)'। "वि जनाञ्छ्यावाः शितिपादो अख्यन् (ऋ० सं० १,३,६,५)"—इति निगमः ॥

(९) विश्वरूपाः‡ । नानावर्णाश्वाः । "बृहस्पतिश्च सविता च विश्वरूपैरिहागतम् ( ? )"—"बृहस्पतिर्विश्वरूपा मुपाजत (ऋ० सं० २,३,५,१)"—इति च निगमौ ॥

(१०) नियुतः§। नि-पूर्वात् 'यु मिश्रणे (अदा०प०)'—इत्यस्मात् क्विप् । नि युवन्ति मिश्रयन्ति तृणपर्णादीनि, आत्मानं रथेन वा । यद्वा; नि-पूर्वात् 'यमु उपरमे (भू०प०)'—इत्यस्मात् 'मृग्रो रुतिः (उ० १,९१)'—इति बाहुलकात् उति-प्रत्ययष्टिलोपश्च । नियम्यन्ते सारथिना नियुतः । "नियुद्भिर्वा यविष्ट्यै दुरोणे (ऋ०सं० ५,६, १४,३)"—इति निगमः ॥

इति दशादिष्टोपयोजनानि ॥ १५ ॥

---

* निरु० १२, ७ ।  † पृ० ७ ।
‡ निरु० १०, ३४. ११, २९. १२, ८; ३८ । § निरु० ५, २५ ।

(२) उश्मसि* । वश्लेर्लडुत्तमपुरुषबहुवचने मसि 'सार्वधातुकमपित् (१,२,४)'—इति ङिद्वद्भावात् 'ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम् 'इदन्तो मसिः (७,१,४६)'—इति इकारः। "ता वां वास्तून्युश्मसि गमध्यै (ऋ० सं० २,२,२४,६)"—इति निगमः॥

(३) वेति† । 'वी गतिप्रजनकान्त्यशनखादनेषु' अदादिः परस्मैपदी। "वेषि होत्र मुत पोत्रं यजत्रा (ऋ० सं० १,५,२४,४)"—इति निगमः॥

(४) वेनति‡ । नैरुक्तो धातुः। "पुराणाँ अनु वेनति (ऋ० सं० ८,७,२३,१)"—"नासत्यामा वि वेनतम् (ऋ० सं० ४,४,१६,२)"—इति च निगमौ॥

(५) वेसति। अयमपि नैरुक्तो धातुः। 'वेशति'—इति पाठान्तरम्। निगमदर्शनान्निर्णयः॥

(६) वाञ्छति। 'वाछि इच्छायां' भौवादिकः (प०)। "विश्वं स्त्वा सर्वा वाञ्छन्तु (ऋ० सं० ८,८,३१,१)"—इति निगमः॥

(७) वष्टि§ । वशः परस्मैपदप्रथमपुरुषैकवचनम्। "समर्यो गा अजति यस्य वष्टि (ऋ० सं० १,३,१,३)"—इति निगमः॥

---

* निरु० १, १९. २, ७. ३, ५. ५, १८. ६, १३. ९, ३९. १२, ५;—४५।

† निरु० १, ७. २, ६;—८;—१४. ४, १;—१९. ९, ४२;—४३. १०, १. १२, ४६।

‡ प० १४. ३, १४;—१५;—१७. ५, ४. १०, ३८. १२, २९। निरु० १, ७. १०, ३८।

§ पु० यत्रैव १।

(८) वनोति । 'वनु धावने' तनादिः (प०), अनेकार्थत्वाद्धातूनामत्र कान्त्यर्थः । एव मन्यत्रापि । "स्याहं यद्रेक्णं परमं वनोषि तत् (ऋ० सं० १,२,२४,४)"—इति निगमः ॥

(९) जुषते*। 'जुषी प्रीतिसेवनयोः' तुदादिरात्मनेपदी, अत्र कान्तिकर्मा । "स पुष्टिं याति जोषमा चिकित्वान् (ऋ० सं० १, ५,२५,५)"—इति निगमः। 'जुषते हर्यति इति पाठात् जोषः कामः'—इति स्कन्दस्वामिभाष्यम् ॥

(१०) हर्यते†। 'हर्य गतिकान्त्योः' भ्वादिः परस्मैपदी । "ता जुषाणो हर्यति जातवेदाः (ऋ० सं० ३,८,११,३)"—इति निगमः ॥

(११) आचके । 'चक तृप्तौ' भ्वादिरात्मनेपदी ; लडुत्तमपुरुषैकवचनम्। "अनाम्योज आ चके (ऋ० सं० ३,४,९,५)"—इत्यत्र 'कमेर्लिटि उत्तमे इटि मलोपश्छान्दसः'—इति भानुदत्तः। "त्वा मंवस्युराचके (ऋ० सं० १,२,१९,४)"—इति निगमः । "यस्ते भ्रातृत्वमाचके (ऋ० सं० ६,३,४२,५)"—इति तु 'लोपस्त आत्मनेपदेषु (७,१,४१)'। यथादृष्टं पाठः ॥

(१२) उशिक्‡ । वष्टेः 'वशः कित् (उ० २,६८)'—इति चिक्प्रत्ययः, कित्त्वात् सम्प्रसारणम्। "उशिक् पावको अरतिः सुमेधाः (ऋ० सं० ७,८,२९,१)"—इति निगमः ॥

---

* निघ० ६, १६. १२, ४२ ।

† प० १४ । निघ० २, १०. ७, १७. १६, १५ ।

‡ प० ३, १५ । निघ० ६, १० ।

(१३) मन्यते* । 'मन ज्ञाने' दिवादिरात्मनेपदी । "आध्रश्चिद्य मन्यमानस्तुरश्चित् (ऋ० सं० ५,४,८,२)"—"यदि मन्येतोपमुस्य-मित्योदनैः ( ? )"—इति च निगमौ ॥

(१४) छन्त्सत्† । 'छदि संवरणे' चुरादिः । पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३,४,९४), 'सिब्बहुलं लेटि (३,१,३४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)'। 'वृषा छन्दुर्भवति हर्यतः (ऋ० सं० १,४,१९,४)'—इत्यत्र 'मन्यते छन्त्सत् चाकनत् इति कान्ति-कर्मसु पाठात्, 'तदिन्मे छन्त्सद् वपुषः (ऋ० सं० ७,७,२९,३)'—इति प्रयोगदर्शनाच्च छदिः कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम् । 'दूरेचत्ताय छन्त्सत् (ऋ० सं० २,१,२१,६)"—इति, "अच्छान्तुः पच्छकृष्ट्यः (ऋ० सं० ८,६,२६,६)"—इति च निगमौ ॥

(१५) चाकनत्‡ । 'कनी दीप्तिकान्तिगतिषु (भू० प०); यङ्-लुगन्तः । 'नुगतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)'। "ब्रह्मेदिन्द्रस्य चाकनत् (ऋ० सं० ६,२,३८,१)"—"ये निः शचिष्ठ चाकनत् ( ? )"—इति च निगमौ ॥

(१६) चकमानः । 'चक तृप्तौ' भ्वादिरात्मनेपदी । 'ताच्छी-ल्यवयोवचनशक्तिषु चानश् (३,२,१२८)'। "चकमानः पिबतु दुग्धमंशुम् (ऋ० सं० ४,२,७,१)"—इति निगमः ।

---

* प० ३, १४;—१९ । निरु० ३, २. ३, ८. ४, २५. ६, २५. ९, १२. ९, २५. ११, २०. ११, ४२ ।

† प० ३, १४ । निरु० ९, ८ ।

‡ प० ३, ११. ४, १;—३ । निरु० ४, १४;—१५. ४, १४ ।

(१७) कनति*। 'कनी दीप्तिकान्तिगतिषु (भू० प०)' भ्वादिः परस्मैपदी। "भानत् कनति नुदतम् ( ? )"—"इन्द्रः सोमस्य काणुका (ऋ० सं० ६,४,२९,४)"—इति च निगमौ।

(१८) कानिषत्†। कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधावृद्धिर्वाऽङ्लकात् इकारलोपः पूर्ववत्। "अग्ने तृतीये सवने हि कानिषः (ऋ० सं० ३,१,२१,५)"—इति निगमः॥

इत्यष्टादश कान्तिकर्माणो धातवः॥ ६॥

अन्धः(१)। वाजः(२)। पयः(३)। प्रयः(४)। पृक्षः(५)। पितुः(६)। वयः(७)। सिनम्(८)। अवः(९)। क्षु(१०)। धासिः(११)। इरा(१२)। इळा(१३)। इषम्(१४)। ऊर्क्(१५)। रसः(१६)। स्वधा(१७)। अर्कः(१८)। क्षद्म(१९)। नेमः(२०)। ससम्(२१)। नमः(२२)। आयुः(२३)। सूनृता(२४)। ब्रह्म(२५)। वर्चः(२६)। कीलालम्(२७)। यशः(२८)। इत्यष्टाविंशतिरन्ननामानि‡॥७॥

* पु० अत्रैव १५। † पु० अत्रैव १५।

(२) इतोऽनन्तरं "पाजः"—इत्यधिकम् ग. C. D. F पुस्तकेषु।

(४) "प्रयः"—इत्येतन्नास्ति क-पुस्तकातिरिक्तेषु, देवराजेन तु "अवः"—इत्यनेनास्य विकल्पः स्वीकृतः।

(७) "वयः" नास्त्येतत् ख. ङ. च पुस्तकेषु। तेषु पुनरस्यैव स्थाने "सुतः"—इति दृश्यते, टीकाकृतापि केचिदित्याद्युक्त्याऽयमतान्तरतोक्ता। ग. C. D. F पुस्तकेषु तु "सुतम्" इति।

(९) "सीनम्" ग।

(११) "चुमत्" ग. "चुत्" C. D. F।

(१८) नैतद् दृश्यते क-पुस्तके।

(१९) "चद्मः" ख।

(२८) नास्त्येतत् पदं ग. C. D. F पुस्तकेषु। ‡ 'इत्यन्नस्य' ग।

(१) अन्धः*। 'अन्धइत्यन्ननाम। आध्यानीयं भवति (निरु० ५,१)' —इति भाष्यम्। 'आभिमुख्येन हि ध्यातव्यं सर्वेणान्नं प्रीतेः शरीर-स्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी। आङ्-पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोपः, उपसर्गस्य ह्रस्वत्वं नुडागमश्च धातोः। यद्वा; 'अद भक्षणे (अदा० प०)'—इत्यस्मात् 'अदेर्नुम् धश्च (उ० ४, २००)'—इति कर्मणि कर्त्तरि वा कारके असुनि नुमागमो धकारश्चान्तादेशः। अद्यते प्राणिभिः, तान् वा स्वयमत्ति। तथाच श्रुतिः —'अद्यतेऽत्ति च भूतानि (तै० उ० २,२)'—इति। 'अनित्यनेनान्धः' —इति क्षीरस्वामी। अनितेरसुनि बाहुलकात् धुगागमः। अनि-त्यन्नं हि प्राणनम्। "आरुचेभिः सिञ्चता मद्यमन्धः (ऋ० सं० २,६,१३,१)"—"इन्द्रेहि मत्स्यन्धसः (ऋ० सं० १,१,१७,१)"— इति च निगमौ॥

(२) वाजः†। 'वज गतौ (भ्वा० प०)'। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। 'अजिव्रज्योश्च (७,३,६०)' —इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः। तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः सिद्धो भवति वाजः'—इति। निगम्यते अभिगम्यते हि तत्सर्वैः। गच्छ-त्यनेनादत्तेन सुखानि, भुक्तेन तृप्तिं वा गच्छत्यनेन शुद्धेन सत्वशुद्धिं भोक्ता। यदाहुः—'आहारशुद्धौ सत्वशुद्धिरिति। यद्वा; गत्यर्था बुद्ध्यर्थाः; जानात्यनेन भुक्तेन धर्मम्। 'दश धर्मान् विजानन्ति

---

* प० ४, २। निरु० ५, १. ९, २६. ११, ९।
† प० १७। निरु० १०, २२. ११, १६;—१६।

धृतराष्ट्रनिबोधजात्। मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः'
—इति श्रीमहाभारतम्। सर्वत्रान्ननामसु गत्यर्थाद् व्युत्पादितेष्वेव
मर्थो बोद्धव्यः। "सुतानां वाजिनीवसू (ऋ०सं० १,१,३,५)"—
अन्यत्र "वाजं हवनस्यदं रथम् (ऋ०मं० १,४,१२,१)"—इति
च निगमौ॥

(३) पयः*। व्याख्यातं रात्रिनामसु पयइत्यत्र (निरु० २,५)।
यद्वा; 'अय पय गतौ (भू०आ०)'—इत्यस्मादसुन्। पीयते ह्यन्नं।
तद्धि चतुर्विधम् पेय-चोष्य-लेह्य-चर्व्यभेदेन। वर्द्धन्ते हि तेन भुक्तेन।
'जातान्यन्नेन वर्द्धन्ते (तै०उ०२,२)'—इति श्रुतिः। "पयस्वानग्न
आगहि (ऋ०सं० १,२,१२,३)"—"यदी मृतस्य पयसा पियानः
(ऋ०सं० १,५,२७,३)"—इति च निगमः॥

(४) प्रयः†। व्याख्यातमुदकनामसु (१११पृ०)। "उपप्रयो-
भिरागतम् (ऋ०सं० १,१,३,४)"—"तुराय प्रयोन हंमि स्तोमं
माहिनाय (ऋ०सं० १,४,१७,१)"—"प्रयस्वन्तः प्रति हर्यामसि
त्वा (ऋ०सं० ८,६,२१,३)"—इति च निगमाः॥

(४) श्रवः। 'श्रु श्रवणे (भू०प०)'। कर्मण्यसुन्। श्रूयते ह्यन्नं
वर्ण्यमानं श्रवो यशः। तद्धर्मात्ताच्छब्द्यं वा। "सत्यश्चिन्न श्रवस्तमः
( ? )"—"मर्त्तं दधामि श्रवसे दिवे दिवे (ऋ०सं० १,२,
३३,२)"—"अभिश्रव ऋज्यन्तः (ऋ०सं० ४,७,९,३)"—इति च
निगमाः। "उप प्रयोभिरागतम् (ऋ०सं० १,१,३,४)"—इत्यादिषु

* प० १२. २, ७। निरु० २, ५।
† प० १०। निरु० ४, २४. ६, १०. १०, ३. ११, ९।

निरुक्त-टीकायां स्कन्दस्वामिना प्रयइत्यन्ननामेत्युच्यते। तथाच 'अर्चिति अर्वः (ऋ० सं० १, ३, २०, ४)'—इत्यादि-निगमेषु वेदभाष्ये, 'अव इत्यन्ननाम'—इति स्पष्ट मुच्यते। निरुक्त-टीकायान्तूभयथा (निरु० १०, ३)। अतः 'प्रयः'-'अवः'-शब्दयोः उभयोरप्यन्ननामत्वं स्पष्टम्। तत्रैकतमस्य पाठो विद्वद्भिर्निर्णीयताम्॥

(५) पृक्षः*। 'पृची सम्पर्के (रु० प०)'। औणादिके क्विपि धातोः कुगागमः। सम्पृक्तं हि तज्ज्ञातृभिः। पृञ्चतिर्दानार्थ इति वा (अदा० आ०)। "वायो तव प्र पृञ्चती (ऋ० सं० १, १, ३, ३)"— इत्यादौ माधवेनोक्तम्। तत्र क्विपि बाहुलकान्न-लोपः। दीयते ह्यन्नमर्थिभ्यः। "त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् (ऋ० सं० १, ३, ४, ४)"—इत्यत्र स्कन्दस्वामिभाष्यम् 'पृक्षा अन्ननामैतत् पठन्ति। "पृक्षो भरन्त वाम् (ऋ० सं० ४, ४, १२, ३)"—इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'—इति। "अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १, ५, १६, २)"—"पृक्षो वहतमश्विना (ऋ० सं० १, ४, २, ६)"—इति च निगमौ। "त्वं शर्धो मारुतं पृक्ष ईशिषे (ऋ० सं० २, ५, १८, १)"—इत्यादौ तु षष्ठ्येकवचनान्तमपि दृश्यते॥

(६) पितुः†। 'पा रक्षणे (अदा० प०)'। 'कमिमनिजनिभायागापाहिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययो बाहुलकादिकारः। रक्षितव्यं ह्यन्नम्। प्यायतेर्बाहुलकात् तु-प्रत्ययो धातोः पि-भावश्च।

---

* प० १०।

† निघ० ५, ९। निरु० ९, २४।

"पितुं नु स्तोषम् (ऋ० सं० २,५,६,१)"—"प्रमन्दिने पितुमदर्चता वचः (ऋ० सं० १,७,१२,१)"—इति निगमौ ॥

(७) वयः* । 'वी गतिप्रजनकान्त्यशनखादनेषु (अदा० प०)' । असुन् । गत्यादिर्सर्वोऽप्यर्थोऽत्रानुगुणः कारकभेदेन । 'वय गतौ (भू० आ०)'-इत्यस्मादसुन् वा । "बृहद्वसे वय इन्द्रो दधाति (ऋ० सं० २,१,१०,२)"—"परि घ्रंसमोमना वां वयो गात (ऋ० सं० ५,५,१६,४)"—इति च निगमौ ॥

केचिदस्य स्थाने "सुतः"†-इति पठन्ति । तत्र 'षूञ् प्राणिप्रसवे (अदा० आ०)' । 'तातव्रातलातसुत'-इत्यादिना क्त-प्रत्ययः, षूञो ह्रस्वत्वञ्च निपात्यते । सूयते वृष्ट्या । "आदित्याज्जायते वृष्टि र्वृष्टेरन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३,७६) । यद्वा; 'सु षु गतौ (भू० प०)'-इत्येतद्-विषयं निपातनम् । निगमोऽन्वेषणीयः ॥

(८) सिनम्‡ । 'षिञ् बन्धने (स्वा० क्र्या० उ०)' । 'इण्सिञ्-दीङुष्यविभ्यो नक् (उ० ३,२)' । 'सिनाति भूतानि'-इति भाष्यम् । 'सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति'-इति, स्कन्दस्वामी । सीयते अनेनेति वा । अन्नेन हि भृत्यादयो बध्यन्ते । "येन स्मा सिनं भरथः सखिभ्यः (ऋ० सं० ३,४,८,१)"—इति निगमः ॥

(९) अवः§ । 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यसाम-

---

* निघ० ६, ४ ।

† निघ० ५, १८;—२२ ।

‡ प० ४, २ । निघ० ५, ५ ।

§ निघ० १०, २२ ।

र्थ्ययाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (भ्वा० प०)'। धात्वर्थेषु योगः सर्वाङ्गीकर्त्तव्यः। "अवत् ब्रह्मण्यवसा-अ्सुन्। गमत् ( ? )"—"अग्निर्गिरोऽवसा वेतु धीतिम् (ऋ० सं० १,५,२५,४)"—इति निगमौ॥

(१०) द्युम्नः। 'टु क्षु शब्दे (अदा० प०)'—'क्षि निवासगत्योः (तु० प०)'। 'खनिकृष्भ्यां डिच्च (उ० १,३२)'—इति विधीयमानो डित्-कु-प्रत्ययो बाहुलकादाभ्यामपि भवति। चूयते शब्द्यते स्तोतृभिः स्तूयते देवतात्वादन्नम् सूक्तादिभिः गुणवत्तया वा लोकैः, निवसत्यनेन वा। "त्वं वाजस्य क्षुमतो राय ईशिषे (ऋ० सं० २,५,१८,५)"—"आ तू न इन्द्र क्षुमन्तम् (ऋ० सं० ६,५,२७,१)"—इति च निगमौ॥

(११) धासिः। 'वृषिभ्रषिकुषिभ्यः क्सिः (उ० ३,१५१)'—इतिर्बाहुलकात् धाञोऽपि भवति, बाहुलकादेव ईत्वं न भवति। दीयते ऽर्थिभ्यो धारयति प्राणान् वा। "विदत्स्वर्मा तनयाय धासिम् (ऋ० सं० १,५,१,३)"—अत्र 'धासिरन्ननाम, इह तु पयस आसन्नकारणत्वात् गोषु प्रयुक्तः'—इति स्कन्दस्वामी॥

(१२) इरा। व्याख्यातं नदीनामसु (१४० पृ०)॥

(१३) इळा*। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, क्षिप्यते उदरे, स्वपत्यनेन भुक्तेन न हि बुभुक्षितस्य निद्रास्ति। "तस्मा इळां सुवीरा मा यजामहे (ऋ० सं० १,३,२०,४)"—इति निगमः॥

(१४) इषम्† । 'इषु इच्छायाम् (तु० प०)'। औणादिकः क्विप्।

---

* पु० ६, १।

† निरु० ६, २६. १०, २६. ११, १४; –२९।

इष्यत इति। यद्वा; 'इषु गतौ (दि०प०)' क्विप्। वेदे प्राचुर्य्येण दर्शनाद् द्वितीयैकवचनान्तम्। "इषं स्तोतृभ्य आभर (ऋ०सं० ३, ८,२२,१)"—"अश्विना यज्वरीरिषः (ऋ०सं० १,१,५,१,)"—इति च निगमौ ॥

(१५) ऊर्क्* । 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः, पक्वं सुप्रवृक्णमिति वा (निरु० ३,८)'—इति भाष्यम्। 'ऊर्ज्जयति' प्रबलति प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। 'पक्वमिति वा' पक्वशब्दस्य पकारलोपं कृत्वा क-शब्दं व्यत्यस्य वकारस्योरि कृते रुगागमे चोर्गिति भवति। 'सुप्रवृक्णमिति वा' ब्रस्चे र-शब्दलोपे कृते, संयोगादिलोपे कृते, अकारस्योपरि रुकि ऊच्चे च कृते ऊर्गिति भवति। सुछिन्नदं हि तद्भवति मृदुत्वात्'—इति स्कन्दस्वामिग्रन्थः। * * *। 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया'—इति भट्टभास्करमिश्रः। अत्र 'ऊर्ज बलप्राणनयोः (चु०प०)' इत्यस्मादेव करणे क्विप्। "यंसि त्वमनूर्जं न विश्वध क्षरध्यै (ऋ०सं० १,५,५,२)"—इति निगमः ॥

(१६) रसः† । व्याख्यातमुदकनामसु। "मह्रे यत् पित्र ईं रसं दिवे कः (ऋ०सं० १,५,१५,५)"—इति निगमः ॥

(१७) स्वधा‡ । स्व-शब्दे उपपदे दधातेः (जु०उ०) 'गेहे कः (३,१,१४४)'—इति क-प्रत्ययो बाहुलकाद् भवति। स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा। "विश्वा हि माया

---

* निरु० ३, ८. २७; –४३. ११, २९।

† पु० १, ११। निरु० ११, २५।

‡ पु० १, १२।

अर्वसि स्वधा वः (ऋ० सं० ४,८,२४,१)"—"आदह स्वधामनु (ऋ० सं० १,१,११,४)"—इति च निगमौ ॥

(१८) अर्कः* ।

(१९) क्षद्म† । व्याख्यातमुदकनामसु (८९ पृ०) । क्षुन्निवर्त्तनादिके स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन भुक्तेन भोक्तेति वा,

३ २उ ३ १ २ ३१ २

हिंस्यतेऽनेनातिभुक्तेनेति वा "अहमन्नमन्नमदन्तमद्मि (सा० सं० आ० १,९)"—इति श्रुतिः । माधवपक्षे क्षदिरशनार्थः (सौ०), अश्यते बुभुक्षितः । "स्वादु क्षद्मापो वसतो स्योनकृत् (?)"—इति निगमः ॥

(२०) नेमः‡ । 'णीञ् प्रापणे (भू० उ०)' । 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १,१३७)' । नमयति सुगतिं दातारं, नीयते देहयात्रा अनेनेति वा ॥

"नेमा"—इति नकारान्तं केचित् पठन्ति । तदा बाहुलकादभिधानलक्षणाद्वा नकारस्येत्सञ्ज्ञाया अभावः । एवमेवास्मिन् सूत्रे वृत्तिकारेणोक्तम् । यद्वा; मनिनि रूपसिद्धिः । निगमदर्शनान्निर्णयः ॥

(२१) सप्तम्§ । 'सप स्वप्ने (अदा० प०)' । 'पुंसि सञ्ज्ञायां घः प्रायेण (उ० ४,११८)' । स्वपन्त्यनेन भुक्तेन, न हि क्षुधितस्यातिनि-

---

* प० २०. ४, २ । निरु० ५, ४. ६, २३ । यद्यपीदं पदं टीकापुस्तके व्याख्यातं न दृश्यते, परमष्टाविंशतिसङ्ख्यापूरणायानन्यगत्या सर्वपुस्तकैकमत्याच्चास्योरीकर्त्तव्यमेवेति ।

† पु० १, १५ ।

‡ प० ३, २९ । निरु० ३, २० ।

§ प० ४, २ । निरु० ५, ३ ।

द्रास्ति । "मुघेन चिद्दिमुदार्यावद्दो वसु (ऋ० सं० १,४,९,३)"— इति निगमः ॥

(२२) नमः । 'णमु प्रह्वत्वे (भू०प०)' । असुन् । उपनतं जातमात्रेभ्यो भूतेभ्यः पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात्, नमन्त्यनेन हेतुना तद्वन्त प्रयोजनस्य च हेतुत्वेन विवक्षा । "प्र वो मुहे महि नमो भरध्वम (ऋ० सं० १,५,१,२)"—"एना वो अग्निं नमसा (ऋ० सं० ५,२,२१,१)"—इति च निगमौ ॥

(२३) आयुः* । अननं प्राणनमस्ति । "पाहि सदुमिद् विश्वायुः (ऋ० सं० १,२,२२,३)"—इति निगमः ॥

(२४) सूनृता† । व्याख्यातमुदकनामसु (५३पृ०) । सुष्ठु नयन्ति क्षुत्प्रयुक्तान् अर्थ्यते वा तदर्थिभिः । यद्वा; शोभना नरः सुनरः 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । वा टाप् । "पुरुणीथे जरते सूनृतावान् (ऋ० सं० १,४,२५,७)"— "अश्विना सूनृतावती (ऋ० सं० १,२,४,३)"—इति च निगमौ ॥

(२५) ब्रह्म‡ । 'वृहि वृहि वृद्धौ (भू०प०)' । 'वृंहेर्नलोपश्च (उ० ४,१४१)'—इति मनिन् । परिवृढं भवति सर्वप्राणिभिः । सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात्, स्वभावतो वा परिवृद्धं सर्वस्य जगतो भरणात्, वर्द्धन्तेऽनेन भूतानीति वा 'जातान्यन्नेन वर्द्धन्ते (तै० उ०

* पृ० २, २ ।
† पृ० १, ८ ।
‡ पृ० १० । निरु० १, ८, १२, २५ ।

२,२)'—इति श्रुतिः। "उप ब्रह्माणि वाघतः (ऋ० सं० १,१,५,५)"—इति च निगमः॥

(२६) वर्चः। 'वर्च दीप्तौ (भ्वा० आ०)'। असुन्। दीप्तिकरं ह्यन्नं शरीरादेः। "तमा संसृज वर्चसा (ऋ० सं० १,२,१२,३)"—"सं माग्ने वर्चसा सृज (ऋ० सं० १,२,१२,४)"—"आयुषा सह वर्चसा (ऋ० सं० ८,३,२७,४)"—इति निगमाः॥

(२७) कीलालम्। 'कल गतौ (प०)' चौरादिकः, 'कील बन्धने (भ्वा० प०)', 'कील खण्डने ( ? )'। कील बन्धने इति व्युत्पत्तौ सिनवदर्थः। कील खंडने इति तु सुच्छेदमित्यर्थः। अपिवा कीला जाठराग्नेर्ज्वाला, तां लाति 'कर्म्मण्यण् (३,२,१)'। "कीलालपे सोमपृष्ठाय वेधसे (ऋ० सं० ८,४,२२,४)"—इति निगमः॥

(२८) यशः*। व्याख्यातमुदकनामसु(११७पृ०)। यशो यशेर्दीप्त्यर्थात्। कीर्त्तिकरं वेति माधवः। तदा वर्चस्वदर्थः। "यशो न पक्वं मधुगोष्वन्तरा (ऋ० सं० ८,६,२,५)"—"तुविद्युम्न यशस्वता (ऋ० सं० ३,१,१६,६)"—इति निगमौ॥

इत्यष्टाविंशतिरन्ननामानि॥ ७॥

**आवयति[१]। भवति[२]। बभस्ति[३]। वेति[४]। वेवेष्टि[५]। अविष्यन्[६]। बप्सति[७]। भसथः[८]। बभ्याम्[९]। ह्वरति[१०] इति दशात्तिकर्माणः†॥ ८॥**

---

* पृ० १, १२।

(१०) "क्रयति" ग. C. D. F।

† "इत्यत्तिकर्माणः" ग।

(१) आवयति*। आङ्पूर्वात् वेतेः (अदा०प०) 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः। यद्वा; 'वेङ् तन्तुसन्ताने (उ०)' भ्वादिः; अनेकार्थत्वात् धातूनामत्राप्तिकर्मत्वम्। एवमन्येष्वपि द्रष्टव्यम्। "आ तु नः स वयति गव्यमश्व्यम् (ऋ०सं०६,२,२,१०)"—इति निगमः॥

(२) भर्वति†। 'भर्व हिंसायाम्' भ्वादिः परस्मैपदी। "पृथून्यग्निरनु याति भर्वन् (ऋ०सं०४,५,८,२)"—"तेन सुभर्वं शतवत् सहस्रम् (ऋ०सं०८,५,२०,५)"—इति निगमौ॥

(३) बभस्ति‡। 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी। "हरी इवान्धांसि बप्सता (ऋ०सं०१,२,२६,२)"—इति निगमः॥

(४) वेवेष्टि§। 'विष्लृ व्याप्तौ (जु०उ०)'। 'जुहोत्यादिभ्यः श्लुः (२,४,७५)'। "स्वतैद्योययातिथि ज्योतिष्कृत्या परिवेवेष्टि- ( ? )"—"यदा त्वा अतिथयः परिवेष्टि ( ? )"—"मरुतः परिवेष्टारः ( ? )"—इति च निगमाः। प्रयोजकव्यापारे प्रयुक्तत्वात् निरूपणीयम्॥

(५) वेति‖। वी गत्यादौ अदादिः परस्मैपदी। "वीतं पातं पयस उस्रियायाः (ऋ०सं०२,२,२३,४)"—इति निगमः॥

(६) अविष्यन्¶। अवतेर्वर्त्तमाने व्यत्ययेन लृट्; लृटः सद्वा।

---

* पु० १४। निरु० १, १४. १०, २०. ११, १८।
† निरु० ९, २३।
‡ निरु० ५, १२; १२. ९, २६।
§ पु० २, ६।
‖ पु० २, ६। ¶ पु० अत्रैव १।

"हृव्वविष्यन्नतसेषु तिष्ठति (ऋ० सं० १,४,२३,२)"—इति निगमः । अत्र च 'अविष्यन्नत्तिकर्म्मा भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी । तस्मादविष्टादिति पाठो न युक्तः ॥

(७) बप्सति*। भसेः प्रथमपुरुषे बहुवचने 'घसिभसो र्हलि च (६,४,१००)'—इत्युपधालोपे रूपम् । "दंष्ट्रैर्वनानि बप्सति (ऋ० सं० ६,३,२८,३)"—इति निगमः ॥

(८) भसथः†। भसेर्लटि थसि 'बहुलं छन्दसि (२,४,७६)'—इति शपः श्लुर्न भवति । "न देवा भसथश्चन (ऋ० सं० ४,८,२५,४)"—इति निगमः ॥

(९) बब्धाम्‡। भसेर्लेटि तसस्तामि श्लौ द्विर्वचनम्, द्विर्वचनान्तत्वानित्यत्वात् उपधालोपः प्राप्नोति छान्दसत्वान्न, 'घसिभसोर्हलि च (६,४,१००)'—इत्युपधालोपः । 'धि च (८,२,२५)'—इत्यादिसूत्रेषु सिचो लोप इति पक्षे सकारलोपश्छान्दसः सकारमात्रलोप इति पक्षे 'झलोझलि (८,२,२६)'—इति सलोपः, भस्त्वजश्त्वे । बब्धामिति पृथक्पाठे प्रयोजनं मृग्यम् । * * * । "बब्धां ते हरीधाना ( ? )"—इति निगमः ॥

(१०) ह्वरति । 'ह्वृ कौटिल्ये' भ्वादिः परस्मैपदी । "अपामतिष्ठद्धरुणह्वरन्तमः (ऋ० सं० १,४,१८,५)"—"उपह्वरे यदुपरा अपिन्वन् (ऋ० सं० १,५,२,१)"—इति निगमौ ॥

इति दशात्तिकर्माणः ॥ ८ ॥

---

* पु० अत्रैव २ ।

† पु० अत्रैव २ ।

‡ पु० अत्रैव २ ।

ओजः(१) । वाजः (वा) पाजः(२) । शवः(३) । तरः(४) । तवः(५) । त्वक्षः(६) । शर्द्धः(७) । बाधः(८) । नृम्णम्(९) । तविषी(१०) । शुष्मम्(११) । शुष्णम्(१२) । शूषम्(१३) । दक्षः(१४) । वीळु(१५) । च्यौत्नम्(१६) । सहः(१७) । यहः(१८) । वधः(१९) । वर्गः(२०) । वृजनम्(२१) । वृक्(२२) । मज्मना(२३) । पौंस्यानि(२४) । धर्णसिः(२५) । द्रविणम्(२६) । स्यन्द्रासः(२७) । शम्बरम्(२८) । इत्यष्टाविंशतिर्बलनामानि* ॥ ९ ॥

(१) ओजः† । व्याख्यातमुदकनामसु (११३पृ०) । उब्जन्त्यनेन, बलवत्सन्निधौ हि ऋजवो भवन्ति भीत्या, न्यग्भावयत्यनेन वा शत्रून् । बर्द्धतेऽनेन ऐश्वर्यादि, वर्द्धते व्यायामादिना । इमावर्थान्तरावपि वृद्ध्यर्थेषु बोद्धव्यौ । 'सुर्वधिकम्'—इति माधवः । हिंसन्तेऽनेन शत्रवो वा । 'उषेर्जुट् च'—इति श्रीभोजदेवः । असुनि गुणः । ओषति दहति शत्रून् । "ओजसो जातमुत मन्य एनम् (ऋ० सं० ८, ३, ४, ३)"—"वसूनि जाते जनमान ओजसा (ऋ० सं० ६, ७, ३, ३)"—इति निगमौ ॥

(२) वाजः‡ । व्याख्यातमन्ननामसु (२०४पृ०) । गच्छन्त्यनेन

(५) "तवः" ख ।
(६) "त्वचः" ग. C. D. F ।
(१५) "वीलु" C. D. E ।
(२२) "विट्" ग ।
(२५) "धर्णसि" ङ.-च-पुस्तकयोरन्यत्र ।
* "इति बलस्य" ग ।
† पृ० १, १२ ।
‡ पृ० ७ ।

शत्रून् प्रति जिगीषवः । गम्यतेऽधिगम्यते व्यायामादिना यत्नेन । इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ । 'वाजो बलं, वाजयतेः प्रेरणार्थात्'—इति माधवः । अनेन शत्रून् प्रेरयति विद्रावयतीति । "परिवाजेषु भूषथः (ऋ० सं० ३,१,१२,४)"—इति निगमः ॥

पाजः* । 'पा रक्षणे (अदा० प०)' । 'पातेर्जुट् च'—इत्यसुन् बलेन हिंस्यते सर्वम् । "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३,४,२३,१)"—इति निगमः । 'समिद्धस्य रुशदददर्शि पाजः (ऋ० सं० ३,८,१२,२)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ० सं० ३,१,१२,३)'—इत्यत्र बलनामैतदित्युक्तं, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ० सं० १,५,७,१)'—इत्यत्र,'अत्यं न वाजं हवनस्यदं रथम् (ऋ० सं० १,४,११,१)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते । अतो वाजपाजशब्दयोरुभयोरपि बलनामत्वं स्पष्टम्; तत्रैकतमस्य पाठो विद्वद्भिरधीयताम् ॥

(३) शवः† । व्याख्यातमुदकनामसु (११२ पृ०) । "मा भेम शवसस्पते (ऋ० सं० १,१,२१,२)"—इति निगमः ॥

(४) तरः । 'तॄ प्लवनतरणयोः (भू० प०)'; असुन् । तरत्यनेन आपदम् । "यावत्तरो मघवन् यावदोजः (ऋ० सं० १,३,३,२)"—इति निगमः ॥

(५) तवः । तवतिर्वधार्थः; असुन् । "अपादमिन्द्र तवसा जघन्थ

---

* पु ७ । † पृ० १, १२ ।

(ऋ०सं० ३,२,२,३)"—"योगेयोगे तवस्तरम् (ऋ०सं० १,२, २९,२)"—इति च निगमौ ॥

(६) त्वक्षः । 'तक्षू तनूकरणे (भ्वा०प०)' ; असुन् । तनूक्रियन्ते तेन शत्रवः । "स प्र रिक्वो त्वक्षसा क्ष्मो दिवश्च (ऋ०सं० १,७, १०,५)"—इति निगमः ॥

(७) शर्द्धः । 'शर्द्धतिरुत्साहार्थः'—इति स्कन्दस्वामी ; असुन् । शत्रुजयादावनेन उत्साहितत्वात् । "अभ्राजिशर्द्धो मरुतोयदर्णसम् (ऋ०सं० ४,३,१५,६)"—इति निगमः ॥

(८) बाधः* । 'बाधृ विलोड़ने (भ्वा०आ०)' ; 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ् । बाध्यतेऽनेन शत्रवः । निगमो ऽन्वेषणीयः ॥

(९) नृम्णम्† । 'नृम्णं * * * नॄन् नतम् (निरु० ११,९)'—इति भाष्यम् । 'नॄन् शत्रुभूतान् प्रति नमति ; ण्यर्थो वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी । 'इन्द्र नृम्णं हि ते शवः (ऋ० सं० १,५,२९,३)'—इत्यत्र ऋक्भाष्यम्—'यस्माच्छत्रुभूतानां मनुष्याणामपि नमनकरणं तव बलम्'—इति । स एव तत्र पृषोदरादित्वेन नृ-नमन-शब्दस्य वर्णलोपादौ नृम्णमिति द्रष्टव्यम् । "अवो नृम्णं च रोदसी सपर्यतः (ऋ०सं० ८,१,९,१)"—"महिश्रवस्तुविनृम्णम् (ऋ०सं० १,३,२७,१)"—इति च निगमौ ॥

(१०) तविषी‡ । तविः सौत्रो धातुर्वृद्ध्यर्थः । तवेष्टिषन् प्रत्ययः ।

---

* निरु० ९, १५. १०, ९ ।

† प० १० । निरु० १०, १०. ११, ९ ।

‡ निरु० ९, २५ ।

टित्वात् ङीप्। "क्षणा रजांसि तविषीं दधानः (ऋ०सं०१,३,६,४)"—"युष्माकमस्तु तविषी पनीयसी (ऋ०सं०१,३,१८,२)"—इति निगमौ॥

(११) शुष्मम्*। 'शुष शोषणे (दि०प०)'। 'अविसिविसिशुषिभ्यः कित् (उ०१,१४१)'—इति मन्-प्रत्ययः। शुष्यत्यनेनारिः। 'शुषिः प्रीणनार्थः'—इति माधवः। प्रियं हि बलम्। 'शुष्ममिति बलनाम, शोषयतीति सतः (निरु०२,२४)'—इति भाष्यम्। 'परस्परसांयोगिकमपि बलं विशेषयति उपमेयतीत्यर्थः'—इति स्कन्दस्वामी। तत्र शोषयतेर्मनिन् 'बहुलमन्यत्रापि सञ्ज्ञाच्छन्दसोः'—इति लुक्। "शुष्मा इन्द्रमवाता अहुतप्सवः (ऋ०सं०१,४,१२,४)"—"यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ०सं०२,६,७,१)"—इति निगमौ॥

(१२) शुष्णम्†।

(१३) शूषम्‡। 'शुष शोषणे (दि०प०)'। पूषमुषकलुषकारुषशैलूषादयः'—इत्यादिग्रहणात् 'उषः प्रत्यूषादयोऽपि भवन्ति'—इति दण्डनाथ-वृत्तिः। ऊषप्रत्ययष्टिलोपश्च निपात्यते शुष्मवदर्थः। "इन्द्राय शूषमर्चति (ऋ०सं०१,१,१८,५)"—इनतमः सत्वभिर्यो ह शूषैः (ऋ०सं०३,२,१३,२)"—इति निगमौ॥

(१४) दक्षः§। 'दक्ष शैघ्र्ये च (भू०आ०)' चकाराद् वृद्धौ।

* निरु० २, २४. २, २१. १०, १०।
† निरु० २, ११. ५, १६. ६, १९।
‡ प० २, ६।
§ निरु० ११२, १. १२, २६।

'दक्ष गतिहिंसनयोः (चु०घ०प०)'। 'दक्षतिरुत्साहार्थः'—इति स्कन्दस्वामी। असुन्। शत्रुविजये क्षिप्रो भवत्यनेन, हिंस्यन्ते वा ऽनेन शत्रवः, प्रोत्साहितो वा भवति शत्रुविजये। "मित्रं हुवे पूतदक्षम् (ऋ०सं०१,१,४,२)'-इति भाष्ये स्कन्दस्वामी—'दक्ष इति सकारान्तं बलनाम'। अकारान्तमपि तस्यैवमर्थान्तरे द्रष्टव्यम्। "जज्ञाना पूतदक्षसा (ऋ०सं०१,२,८,४)"—इति निगमः।

(१५) वीळु। वीळयति संस्तम्भकर्म्मा। 'भृमृशीङ्चरित्सरितनिधनिमिमस्जिभ्य उः (उ०१,७)'—इति उ-प्रत्ययो बाहुलकादस्मादपि भवति। संस्तब्धो दृढो भवति अनेन, संस्तभ्यन्ते ऽनेन शत्रव इति वा। निगमोऽन्वेषणीयः॥

(१६) च्यौत्नम्। 'च्युङ् गतौ (भ्वा०आ०)। * * *। अन्तर्णीतण्यर्थो वा। च्यवन्ति च्यावयन्ति शत्रूननेन राज्यात्। "प्र च्यौत्नेन मघवा सत्यराधाः (ऋ०सं०८,१,८,६)"—इति निगमः॥

(१७) सहः*। 'षह मर्षणे (भ्वा०आ०), छन्दस्यभिभवार्थः। असुन्। सहत्यनेन शत्रून्। "ये सहांसि सहसा सहन्ते (ऋ०सं० ५,१,८,४)"—इति निगमः॥

(१८) यहः†। व्याख्यातमुदकनामसु (११३प०)। प्राप्यते आक्रम्यते वानेन शत्रुः। निगमोऽन्वेषणीयः॥

(१९) वधः‡। 'हन हिंसागत्योः (भ्वा०प०)। 'हनश्च वधः (३,३,७६)'—इत्यप्। हन्यतेऽनेन शत्रुः। निगमोऽन्वेषणीयः॥

---

* पृ० १, १२।
† पृ० १, १२।
‡ पृ० २०।

(२०) वर्गः। (२१) वृजनं* । (२२) वृक् । 'वृजी वर्जने (रु०प०)' । घञ् । 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः (उ० २,७६), 'क्विप् च (३,२,७६)' । वर्ज्यन्तेऽनेन प्राणैः । "जरयन्ती वृजनं यद्दीयते (ऋ०सं० १,४,३,५)"—प्रतीचीनं वृजनं दोहसे गिरा (ऋ०सं० ४,२,२३,१)"—इति च निगमौ ॥ माधवस्तु—'मध्योदात्तन्तु वृजनं वर्त्तते बलयुद्धयोः । "वृजनेन वृजिनान्त्सम्पिपेष (ऋ०सं० ३,२,१६,१)"—"त्वं युष्मां वृजने पृत्त आणौ (ऋ०सं० १,५,४,३)"—"जरयन्ती वृजनं (ऋ०सं० १,४,३,५)" तु वर्त्तते उपद्रवे'—इति । तदान्वेषणीयौ निगमौ ॥

(२३) मज्मना । 'टु मस्जी शुद्धौ (तु०प०)। औणादिको मनिन् (उ० ४,१४०)। 'झलां जश् झशि (८,४,५३)', चुत्वम्, तृतीयैकवचनम् । मज्जयति शत्रून् । "नाभा पृथिव्या भुवनस्य मज्मना (ऋ०सं० २,२,१२,४)"—"स इन्महानि समिथानि मज्मना (ऋ०सं० १,४,१८,५)"—"वि रोदसी मज्मना बाधते शवः (ऋ०सं० १,४,१०,५)"—इति निगमाः। निगमेषु तृतीयैकवचनान्तस्य प्रायशोदर्शनात् तदन्तः पठितः ॥

(२४) पौंस्यानि† । 'पुंसि अभिवर्द्धने (प०) चुरादिः । 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः । "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ०सं० ४,७,८,३)"—"यस्मिन् विश्वानि पौंस्या (ऋ०सं० १,१,१०,४)"—"महत्तदस्य पौंस्यम् (ऋ०सं० १,५,३०,५)"—इति निगमः ॥

---

* प० ६, २२ । निरु० ५, २८ । † प० १७ ।

(२५) धर्णसि । 'धृञ् धारणे (भू०उ०)' । "सानसिवर्णसिपर्णसि (उ०४,१०४)"—इत्यसि-प्रत्ययोनुमागमोऽपि निपात्यते गुणः । ध्रियतेऽनेन राज्यादि । निगमोऽन्वेषणीयः ॥

(२६) द्रविणम्* । 'द्रु गतौ (भू०प०)' । 'द्रुदक्षिभ्यामिनन् (उ०२,५२)' । "सनो ददातु द्रविणम् (?)"—इति निगमः ॥

(२७) स्यन्द्रासः । 'स्यदि किञ्चिच्चलने (भू०आ०)' । 'अन्ध्ररन्ध्रसिक्लिन्ध्रेध्रपुंड्रतीव्रशीघ्रगोरेन्द्राभद्रस्यन्द्रकुलीरादयः'—इति रन्-प्रत्ययान्तो निपात्यते । तस्मात् जसेरसुक् (७,१,५०) । स्यन्दतेऽनेन शत्रून् । निगमोऽन्वेषणीयः ॥

(२८) शम्बरम्† । व्याख्यातमुदकनामसु (१२६पृ०) । संव्रियतेऽनेन शत्रुः, संवृणोति वा तत्र आपदम् । शमनमुपद्रवाणामुत्कर्षं च युद्धादौ, शम्बेनेन्द्रेणादीयते वा । बलाधिदेवताह्यैन्द्रः । 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु०७,१०)'—इति भाष्यम् निगमोऽन्वेषणीयः ॥

इत्यष्टाविंशतिर्बलनामानि ॥ ९ ॥

**म॒घम्[१] । रेक्ण॑ः[२] । रि॒क्थम्[३] । वेद॑ः[४] । वरि॑वः[५] । श्वा॒त्रम्[६] । रत्न॑म्[७] । र॒यिः[८] । क्ष॒त्रम्[९] । भर्गः॑[१०] । मी॒ळ्हुम्[११] । गय॑ः[१२] । द्यु॒म्नम्[१३] । इ॒न्द्रि॒यम्[१४] ।**

---

* प० १० । निरु० ८, १ ।

† पु० १, १० ।

(११) "मीळ्हम" क ।

(१२) "गयः । स्वम्णाम् । द्युम्नम्"—इति, "तना । बन्धुः"—इति च ग C. D. F ।

वसु[१५] । रायः[१६] । राधः[१७] । भोजनम्[१८] । तना[१९] । नृम्णम्[२०] । बन्धुः[२१] । मेधा[२२] । यशः[२३] । ब्रह्म[२४] । द्रविणम्[२५] । श्रवः[२६] । वृत्रम्[२७] । ऋतम्[२८] । इत्यष्टाविंशतिरेव धननामानि* ॥ १० ॥

(१) मघम्† । मंहतिर्दानकर्मा (प० ३,२०,१०) । 'घञर्थे क-विधानम् (३,३,५८वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् क-प्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च । दीयतेऽर्थिभ्यः । "तेभिरिन्द्रं चोदय दातवे मघम् (ऋ० सं० ७,२,२३,५)"—"यदिन्द्र दक्षिणा मघोनी (ऋ० सं० २,६,६,६)"—इति निगमौ ॥

(२) रेक्णः‡ । 'रिचिर् विरेचने (रु० उ०)' । 'रिचेर्धने घिच्च (उ० ४,१९४)'—इत्यसुन्, नुडागमो गुणश्च, घित्वात् 'चजोः कुघिण्यतोः (७,३,५२)'—इति कुत्वम् । 'रेक्ण इति धननाम, रिच्यते प्रयतः (निरु० ३,२)'—इति भाष्यम् । रिच्यते अवतिष्ठते प्रयतः म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थः । 'रेक्णोधनं रिचेः प्रेरणार्थात्'—इति माधवः । प्रेर्यतेऽनेन दत्तेन भृत्यादिः कर्मसु । "स्पार्हं यद्रेक्णः परमं वनोषि तत् (ऋ० सं० १,२,३४,४)"—"परिषद्यं ह्यरणस्य रेक्णः (ऋ० सं० ५,२,६,२)"—इति च निगमौ ॥

(३) रिक्थम्§ । रिचेः (रु० उ०) 'पातृतुदिवचिरिचिसिचिभ्य-

---

(२५) इतोऽनन्तरं "श्रवः"—इत्यधिकं ग ।

(२८) "ऋतम्"—इति ग. iid । "वित्तम्"—इति च टीकाकृता दृष्टमच केषुचित्, परं न तत्तत्सम्मतम् ।

* "इत्यष्टाविंशतिर्धननामानि" च० । "इति धनस्य" ग० ।

† निरु० १, ७. ४, १७. ५, १६ ।

‡ निरु० ३, २ ।    § निरु० ३, ६ ।

स्थक् (उ० २,६)'—इति थक्। पूर्ववदर्थः। "न जामये तान्वो रिक्थमारैक् (ऋ० सं० ३,२,५,२)"—इति निगमः॥

(४) वेदः। 'विदॢ लाभे (अदा० प०)'। असुन्। विदन्त्येतत्, लभ्यते वाऽनेन धर्मादिः। "होतारं विश्ववेदसम् (ऋ० सं० १,१, २२,१)"—इति निगमः॥

(५) वरिवः। 'वृञ् वरणे (स्वा० उ०),' अस्माद् यङ्लुगन्तात् असुनि बाहुलकादिलोपः। भृशं व्रियते, वरिवसो हेतुत्वाद्वा वरिवः 'वित्तं बन्धु र्वयः कर्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयोयद्यदुत्तरम् (२,१३६)'—इति मनुः। "युधा देवेभ्यो वरिवश्चकर्थ (ऋ० सं० १,४,२५,५)"—"अंहोराजन् वरिवः पूरवे कः (ऋ० सं० १,५,५,२)"—इति निगमौ॥

(६) श्वात्रम्*। आशुशब्द उपपदे 'अत सातत्यगमने (भ्र० प०)' —इत्यस्मात् 'आदित्यश्विदसि'—इति क्तप्रत्ययः; पृषोदरादित्वेन आशुशब्दस्य व्युत्पत्स्यते; यणादेश-सवर्णदीर्घौ। आशु अतति आशु गच्छति; चञ्चलं हि धनम्। निगमोऽन्वेषणीयः॥

(७) रत्नम्†। 'रमु क्रीडायाम् (भ्र० आ०)', 'रमेस्त च (उ० ३, १२)'—इति न-प्रत्ययस्तकारस्यान्तादेशः। रमणीयं हि तत्। 'रमतेऽस्मिन्'—इति क्षीरस्वामी। 'वित्ते रमस्व बहु मन्यमानः' —इति श्रुतिः। "धा रत्नं महि स्थूरं बृहन्तम् (ऋ० सं० ४,६, ८,५)"—"होतारं रत्नधातमम् (ऋ० सं० १,१,१,१)"—इति निगमौ॥

---

* प० ९, १०. ४, १। नि० ५, ३। † नि० ७, १५।

(८) रयिः* । व्याख्यातमुदकनामसु (१२२पृ०) । गम्यते प्राप्यते पुण्येन गच्छत्यनेन तृप्तिं भोगसाधनत्वाद्, यशो वाऽऽदत्ते, दीयते ऽर्थिभ्य इति वा । "अग्निना रयिमश्नवत् (ऋ० सं० १,१,१,३)"—इति निगमः ॥

(९) क्षत्रम्† । व्याख्यातमुदकनामसु (११४पृ०)। पूर्वजन्म-सुकृतवशेन तदेति स्थिरं भवति, गृह्यते उपभोगसाधनत्वात्, हिनस्ति दारिद्र्यम् । गतावपि शब्दवदर्थः । क्षतात् पापात् त्रायते । क्षत्र-शब्दात् त्रायतेश्च पृषोदरादित्वात् क्षत्रम् । धनैरेव पापं नरा निस्तरन्तीत्युच्यते । "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २,१,१)"—"सुक्षत्रासो रिशादसः (ऋ० सं० १,१,३६,५)"—इति च निगमौ ॥

(१०) भगः‡ । 'भज सेवायाम् (भू० उ०)' । 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)', 'चजोः कुघिण्यतोः (७,३,५२)' । भज्यते सेव्यते भोगार्थिभिः । यद्वा सेव्यतेऽनेन हेतुना तद्वान् । भगशब्दः पुँल्लिङ्गोधनवचनः । "शिवास्तोत्तृभ्यो मातिधग्भगो नः (ऋ० सं० २, ६,६,६)"—"यद्धित—स्तोभगः ( ? )"—इति निगमौ ॥

(११) मीळ्हुम्§ । 'मिह सेचने (भू० प०)' । * * * । ढत्व-चर्त्व-ष्टुत्व-ढलोप-दीर्घाः, ळ्हकार-भावश्च । सिच्यतेऽर्थिभ्योदातृ-भिः । 'सहस्रमीळ्हुष्टमशिवानमा ? इत्यत्र भट्टभास्करमिश्रभाष्येऽपि

---

* पु० १, १२ ।
† पु० १, ११ ।
‡ प० ५, ६ । निरु० १, ७. २, १०. ६, ३१. ९, ३१. १२, १३ ।
§ प० १० ।

'मील्हु इति धननाम'—इति दृश्यते। ततो निष्कृत्य उकारान्त-निगमदर्शनाभावात् अकारान्तनिगमदर्शनात् उकारान्ताकारान्त-द्वयोरपि स्वीकारोऽस्माकम्। "रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः (ऋ० सं० ५,१,७,३)"—"ताँ आ रुद्रस्य मीळ्हुषः (ऋ० सं० ५, ४,२८,५)"—इत्यादौ निर्वाहकत्वात् "मीळ्हुम्"—इति पठित-व्यमिति केचिदाहुः। अन्ये तु "मीळ्हः" इति सकारान्तमपि * * *। तेषां मीळ्हांसमिति निर्वाहः। उभयेषामपि "महस्त्व मीळ्हे (ऋ० सं० १,७,३४,५)"—इत्यकारान्तस्य पाठोऽपेक्षणीयः। बहुभ्यस्तु निर्णयः॥

(१२) गयः*। व्याख्यातमपत्यनामसु (१७४पृ०)। इहापि तदर्थः। गीयते स्तूयते होतृभिः। "अपंचद्दाशुषे गयम् (ऋ० सं० १,५,२१,२)"—इति निगमः॥

(१३) द्युम्नम्†। 'द्युम्नसुम्ननिम्न'—इत्यादिना 'द्युत दीप्तौ (भू० आ०)'—इत्यस्मात् न-प्रत्ययो मकारश्चान्तादेशो निपात्यते। तेन तद्वान्। दीप्यते द्युम्नम्। 'द्यु अभिगमने (अदा० प०)'—इति क्षीरस्वामी। अत्र धातोर्मगागमो निपात्यते। "द्युम्नं सहस्रसात-मम् (ऋ० सं० १,१,१८,३)"—"द्युम्ना वाजेभिरागतम् ( ? )" —इति च निगमौ॥

(१४) इन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा (५,२,९३)'—इति घ-प्रत्ययान्तमन्तोदात्तं

---

* पु० २।
† प० ४, २। निरु० ५, ५।

निपात्यते। इन्द्रः—'इदि परमैश्वर्ये (भ्रू०प०)', परमैश्वर्ययुक्त उच्यते। इन्द्रस्य लिङ्गम्। धनेन हि ऐश्वर्ययुक्त इति व्यज्यते। अत्र षष्ठी, समर्थात्; लिङ्गार्थे घञ्। यद्वा; इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा; इन्द्र आत्मा, तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्रजुष्टं वा; आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्तेः। इन्द्रदत्तं वा; इन्द्रेण पूर्वकर्मणा वा अस्मुपदत्तम्। सृष्ट-जुष्ट-दत्तार्थेषु तृतीया समर्थात्। "दक्षिणं पादमवनेनिजेऽस्मिन्नाष्ट्र इन्द्रियं दधामि (ऐ० ब्रा० ८,५,४)"—इति निगमः॥

(१५) वसुः*। रात्रिनामसु "वस्वी"—इत्यत्र व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। * * *। "अहं भुवं वसुनः पूर्व्यस्पतिः (ऋ० सं० ८,१,५,१)"—इति निगमः॥

(१६) रायः†। 'रा दाने (अदा०प०)'। 'रातेर्डैः (उ० २, ६२)'। जस्। दीयतेऽर्थिभ्यः, तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। "अनामृणः कुविदादस्य रायः (ऋ० सं० १,३,१,१)"—इति निगमः॥

(१७) राधः‡। 'राध साध संसिद्धौ (स्वा०प०)'। असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। राधिर्हिंसार्थोऽपि। हिनस्ति दारिद्र्यम्। "राधं इन्द्र वरेण्यम् (ऋ० सं० १,१,१७,५)"—"राधस्तन्नो विदद्वसो (ऋ० सं० ४,२,१०,१)"—इति निगमौ॥

---

* पु० २, ७।
† निरु० ३, २. ४, ७।
‡ निरु० ४, ४. ११, २४।

(१८) भोजनम्*। 'भुज पालनाभ्यवहारयोः (रु०प०)'। ल्युट् 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति। यद्वा; अभिमतार्थैं भवति भुज्यते तद्वद्भिः, भुज्यन्तेऽनेन विषयाः इति वा, पाल्यतेऽनेन वा। "अनूयुतामा भरा भोजनानि (ऋ०सं० ३,८,१८,५)"—"मा नः प्रिया भोजनानि प्र मोषीः (ऋ०सं० १,७,१९,३)"—इति निगमौ॥

(१९) तना। 'तनु विस्तारे (त०प०)'। पचाद्यच् (३,१,१३४)। तनोति विस्तारयति त्रिवर्गसाधनं हि धनम्। तृतीयैकवचनस्य 'सुपां सुलुक् (७,१,३९)'—इत्याकारः। "वृिक्रयन्ते तना गिरा (ऋ०सं० ६,३,२५,१)"—"आ वां मघू तनाय कम् (ऋ० सं० १,३,१९,२)"—इति निगमौ॥

(२०) नृम्णम्†। व्याख्यातं बलनामसु (२१७पृ०)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वस्तु। "हस्ते दधानो नृम्णा विश्वानि (ऋ०सं० १,५,११,२)"—इति निगमः॥

(२१) बन्धुः‡। 'बन्ध बन्धने (क्र्या०प०)'। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'—इति उ-प्रत्ययः। बध्नात्यनेन भृत्यादीन्। यद्वा; बन्धुरिव बन्धुः। "अबन्धुना सुश्रवसोपजग्मुषः (ऋ० सं० १,४,१६,४)"—इति निगमः॥

(२२) मेधा§। 'मिधृ मेधृ सङ्गमे च (भू०उ०)' चकारात्

---

* निरु० ४, ५।

† पु० ९।

‡ निरु० ४, १।

§ निरु० २, १९।

हिंसामेधयोश्च। 'मिधिः सङ्गत्यर्थः'—इति माधवः। घञ्। सङ्गच्छ-तेऽनेन सर्वं तद्वता, हिंस्यते वा तद्वान् चौरादिभिः 'घ्नन्ति चैवार्थ-कारणात्'—इति महाभारतम्। यद्वा; मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धनं धार्यते। तत्र मति-शब्द उपपदे धातोः 'घञर्थे क-विधानम् (३,३,५८वा०)—इति कः, पृषोदरादित्वात् (६,३,१०९) मतिशब्दस्य मे-भावः। मेधाकारं विदथस्य प्रसाधनम् (ऋ० सं० ८,४,२१,३)"—इति निगमः॥

(२३) यशः*। व्याख्यातमन्ननामसु (२१२पृ०)। "उत त्या मे यशसा श्वेतनायै (ऋ० सं० २,१,१,४)"—इति निगमः॥

(२४) ब्रह्म†। व्याख्यातमन्ननामसु (२११पृ०)। वर्द्धन्तेऽनेन धर्मादयः, बृंहकं वा भोगानाम्। "अस्माकं ब्रह्म पृतनासु सह्याः (ऋ० सं० २,२,२२,७)"—इति निगमः॥

(२५) द्रविणम्‡। व्याख्यातं बलनामसु (२२१पृ०)। रयि-वदर्थः। "त आ यजन्त द्रविणं समस्मै ( ? )"—इति निगमः॥

(२६) श्रवः§। व्याख्यातमन्ननामसु (२०५पृ०)। "अस्मे पृथु-श्रवो बृहत् (ऋ० सं० १,१,१८,२)"—"बृहच्छ्रवा असुरोबर्हणा-कृतः (ऋ० सं० १,४,१७,५)"—इति निगमौ॥

(२७) वृत्रम्¶। व्याख्यातं मेघनामसु (७२पृ०)। आच्छाद-यति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थे

* पृ० १, १२।
† पृ० ७।
‡ पृ० ९।
§ पृ० ७।
¶ पृ० १, १०।

रयिवदर्थः। वृद्धो ब्रह्मवदर्थः। "वृत्रं पुरुकुत्साय रन्धीः (ऋ० सं० २,४,१६,२)"—इति निगमः। अत्र स्कन्दस्वामिना 'वृत्रं धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमानमपि "वित्तम्"—इति न पठनीयम्॥

(२८) वृतम्। 'वृङ् सम्भक्तौ (क्र्या० प०)'। 'दुतनिभ्यां दीर्घश्च वा (उ० ३,८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्त-प्रत्ययः। सम्भज्यते सर्वैः। "वृतञ्चयः सहुरिर्विक्ष्वारितः (ऋ० सं० २,६,२७,३)"—इति निगमः॥

इत्यष्टाविंशतिरेव धननामानि॥ १०॥

**अघ्न्या[१]। उस्रा[२]। उस्रिया[३]। अही[४]। मही[५]। अदितिः[६]। इळा[७]। जगती[८]। शक्वरी[९]। इति नव गोनामानि*॥ ११॥**

(१) अघ्न्या†। 'अहन्तव्या भवतीत्यघघ्नीति वा (निरु० ११, ४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अहन्तव्या। अघ शब्दे नञि वा उपपदे हन्तेः 'अघ्न्यादयश्च (उ० ४,१०८)'——इति यत्-प्रत्ययान्तं निपात्यते। "नहि मे अस्त्यघ्न्या (ऋ० सं० ६,७,१२,४)"—"अद्धि तृणं मघ्न्ये विश्वदानीं (ऋ० सं० २,३, २१,५)"—इति निगमौ॥

---

(६) "अदितिः" ङ।

* इति गवाम्।

† प० ५,५। निरु० ११,४३।

(२) उस्रा*। व्याख्यातं रश्मिनामसु (३६पृ०)। वसति क्षीरादि हविरस्याम्। 'उस्रियेति गो-नामोत्स्राविणोऽस्यां भोगा उस्रेति च'—इति (निरु० ४,१९) भाष्यम्। 'उत्स्राविणोऽस्यां भोगास्ते ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण'—इति स्कन्दस्वामी। "मयोभू वातो अभिवातूस्राः (ऋ०सं० ८,८,२७,१)"—"उस्रः पितेव जारयायि यज्ञैः (ऋ०सं० ४,५,१४,४)"—इति च निगमौ॥

(३) उस्रिया†। उस्र-शब्दात् पृषोदरादित्वेन स्वार्थे घः। अर्थः पूर्ववत्। "अविद्र उस्रिया अनु (ऋ०सं० १,१,११,५)"—"समुस्रियाभि वावशन्त नरः (ऋ०सं० १,५,१,३)"—इति च निगमौ॥

(४) अही‡। अहिशब्दो व्याख्यातो मेघनामसु (६९पृ०)। 'कृदिकारात् (४,१,४५वा०)'—इति ङीप्। गम्यतेऽनया क्षीरादि-हविः, गम्यते दत्तया पुण्यम्; अंहति शृङ्गादिना मनुष्यान्, न हन्तव्या वा। निगमो ऽन्वेषणीयः। "ईङ्खेण्यासो अह्यो३ नचारवः (ऋ०सं० ७,३,२,३)"—इति भाष्यं द्रष्टव्यम्॥

(५) मही§, (६) अदितिः‖, (७) इळा। व्याख्यातानि पृथिवी-नामसु (१२-१३-१४पृ०)। तत्र द्यतेः क्तिनि, 'द्यतिस्यति (४,७,

* पृ० १; ५।
† निरु० ४, १९।
‡ पृ० २, २०।
§ पृ० १, १।
‖ पृ० १, १।
¶ पृ० १, १।

४०)'—इतीत्वे दितिः; नञ्-समासः। इत्यदिति-शब्दस्य व्युत्पत्तिः। मह्यते पूज्यते सर्वदेवतात्मकत्वात् उपभोगसाधनत्वाद्वा। मह्यन्तेऽनया देवाः पय आदीनां हविषां तदायत्तत्वात्। "देवाश्च याभिर्यजते ददाति च ( ? )"—इति श्रुतिः। पुनः पुनः दुह्यमानापि न क्षीयते। न द्यति, अखण्डनीया वा। ईड्यते स्तूयते देवतात्वात् दीप्यते वा चारुतया। गम्यते तदर्थिभिरिति वा। "महीनां पयोसि (य०वा०सं०४,३)"—इति, "अदितएहि सरस्वत्येहि (य०वा०सं०३८,२)"—इति, "मिमिक्षा समिळाभिरा (ऋ० सं०१,४,५,६)"—"इडे रन्ते हव्ये काम्ये (य०वा०सं०८,४३)" —इति च निगमाः॥

(८) जगती*। मनुष्यनामसु "जगतः"—इत्यत्र व्याख्यातम् (१८४पृ०)। शतृ। 'उगितश्च (४,१,६)'—इति ङीप्। गम्यते तदर्थिभिः। जगत्या छन्दसा आहार्यत्वाद् अत्राहार्याहरणयोरभेदेन वा जगती। "जागता हि पशवो जगती हि तामनाहरत् ( ? )"—इति हि ब्राह्मणम्। "जागताः पशवः (ऐ०ब्रा० ४,१,३)"—इति च। "समोषधयोरसेन स रेवतीर्जगतीभिः ( ? )"—इति निगमः† ॥

(९) शक्करी‡। व्याख्यातं वाङ्नामसु (१९१पृ०)। शक्नोति क्षीरादिप्रदानेन तद्वन्तं प्रीणयितुं स्पर्शनेन वा पापमपनेतुम्। शक्करी-

---

* पु० २।

† ऋ० सं० २, २, १७, ५. इदृशोऽपरनिगमः।

‡ पु० ४।

शब्दसम्बन्धादभेदेन वा शक्करी। "पशवो वै शक्वर्यः पशूनेवाव-रुन्धते ( ? )"—इति श्रुतिः। निगमोऽन्वेषणीयः॥

इति नव गोनामानि॥ ११॥

रेळते(१)। हेळते(२)। भामते(३)। हृणीयते(४)। भ्रीणाति(५)। भ्रेषति(६)। दोधति(७)। वनुष्यति(८)। कम्पते(९)। भोजतः(१०)। इति दश क्रुध्यतिकर्माणः* ॥१२॥

(१) रेळते। अयं नैरुक्तो धातुः। "अरेळता मनसा देवानां पतेत्( ? )"—इति निगमः॥

(२) हेळते। 'हेडृ अनादरे क्रोधे च' भ्वादिरात्मनेपदी। "अहेळमानोररिवाँ अजाश्व (ऋ० सं० २,२,२,४)"—"अहेळमानो वरुणेह बोधि (ऋ० सं० १,२,१५,१)"—इति निगमौ॥

(३) भामते। 'भाम क्रोधे' भ्वादिरात्मनेपदी। "देव जुष्टोष्यते भामिनेगीः (ऋ० सं० १,५,२५,१)"—"स्वयम्भूर्भामो अभिमातिषाहः (ऋ० सं० ८,३,१८,४)"—इति निगमौ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादिः। "पुनः प्रायच्छदहृणीयमानः (ऋ० सं० ८,६,७,२)"—"हृणीयमानो अप हिमदैयेः (ऋ० सं० ३,८,१५,२)"—इति निगमौ॥

(५) भ्रीणाति। 'भ्री भये' क्र्यादिः परस्मैपदी। अनेकार्थ-

(४) "भृणीयते" कासिरिक्तेषु सर्वत्रैव।
* "इति क्रोधस्य" ग।

त्वात् क्रुध्यतिकर्मा। एवमुत्तरत्रापि। "एनः कृण्वन्तमसुर भ्रीणन्ति (ऋ० सं० २,७,१०,२)"—इति निगमः॥

(६) भ्रेषति। 'भ्रेषु चलने' भ्वादिः स्वरितेत्। निगमोऽन्वेषणीयः॥

(७) दोधति। नैरुक्तो धातुः। "इन्द्रो वृत्रस्य दोधतः (ऋ० सं० १,५,२९,५)"—इति निगमः॥

(८) वनुष्यति*। 'वनुष्यतिर्हन्तिकर्मा (निरु० ५,२)'—इत्यत्र स्कन्दस्वामी—'वनोतेः कण्ड्वादिप्रक्षेपात् यक्-प्रत्ययः, तत्सन्नियोगेन च वनुभावो द्रष्टव्यः'—इति। निगमोऽन्वेषणीयः†॥

(९) कम्पते। 'कपि चलने' भ्वादिरात्मनेपदी। निगमोऽन्वेषणीयः॥

(१०) भोजते। 'भुज कौटिल्ये' तुदादिः परस्मैपदी। 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वात् गुणः। व्यत्ययेनात्मनेपदम्। निगमोऽन्वेषणीयः‡॥

इति दश क्रुध्यतिकर्माणः॥ १२॥

**हेळः[१]। हरः[२]। घृणिः[३]। त्यजः[४]। भामः[५]। राहः[६]। ह्वरः[७]। तपुषी[८]। जूर्णिः[९]। मन्युः[१०]। व्यथिः[११]। इत्येकादश क्रोधनामानि§॥ १३॥**

---

* प० ४, २। निरु० ५, २।

† "दीर्घप्रयज्युमति यो वनुष्यति (ऋ० सं० ५,६,२,१)"—इति निगमं गृहाण।

‡ ऋ० सं० १,५,१८,२. द्रष्टव्यः।

(३) "ह्णिः" सर्वत्र कातिरिक्तेषु।

(७) "चरः" C. D. F।

§ "इति क्रोधस्य" ग।

१,२,१४,१)"—"आ हृणानस्य मन्यवे (ऋ० सं० १,२,१६,२)" —इति निगमौ ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)'। 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इति इन्। बिभेत्यस्मात् सज्जनः, चलति वानेन स्वधर्मात्। "पतत्रिभिरश्रमैरव्यथिभिः (ऋ० सं० ५,५,१६,७)"—"अग्ने माकिष्टे व्यथिरा दधर्षीत् (ऋ० सं० ३,४,२३,३)"—इति च निगमौ ॥

इत्येकादश क्रोधनामानि ॥ १३ ॥

वर्त्तते[१]। अयते[२]। लोटते[३]। लोठते[४]। स्यन्दते[५]। कसति[६]। सर्पति[७]। स्यमति[८]। स्रवति[९]। स्रंसति[१०]। अवति[११]। श्चोतति[१२]। ध्वंसति[१३]। वेनति[१४]। मार्ष्टि[१५]। भुरण्यति[१६]। शवति[१७]। कालयति[१८]। पलयति[१९]। कण्टति[२०]। पिस्यति[२१]। बिस्यति[२२]। मिस्यति[२३]। प्रवते[२४]। प्लवते[२५]। च्यवते[२६]। कवते[२७]। गवते[२८]। नवते[२९]। क्षोदति[३०]। नक्षति[३१]। सक्षति[३२]। म्यक्षति[३३]। सचति[३४]।

---

(१) "स्यन्दति" ग. C. D. F।

(११) "अवति" इह नास्ति, परस्तात (२९) पाठभेदेन दृश्यते ग. C D. F

(२९) "अवते" ग. C. D. F।

(३२) इतोऽनन्तरमेव "इयक्षति (४०)" ग. C. D. F।

(३३) "सियक्षति" ग. C. D. F।

(३४) इतोऽनन्तरम् "श्चवति"—इत्यधिकम् ग. C. D F।

ऋच्छति[३५] । तुरीयति[३६] । चतति[३७] । अतति[३८] । गाति[३९] । इयक्षति[४०] । सश्चति[४१] । त्सरति[४२] । रंहति[४३] । यतते[४४] । भ्रमति[४५] । ध्रजति[४६] । रजति[४७] । लजति[४८] । क्षियति[४९] । धमति[५०] । मिनाति[५१] । ऋण्वति[५२] । ऋणोति[५३] । स्वरति[५४] । सिसर्ति[५५] । विषिष्टि[५६] । योषिष्टि[५७] । रिणाति[५८] । रीयते[५९] । रेजति[६०] । दध्यति[६१] । दभ्नोति[६२] । युध्यति[६३] ।

---

(३७) "चतति (४०)" स्थाने "त्सरति (४२)" ग. C. D. F ।
(३९) "गाति (११२)" स्थाने "पतति (११४)" ग. C. D. F ।
(४०) "इयचति" इति गतं पुरस्तात् (३२), इहत्यस्य स्थाने "चतति(३७)" ग. D ।
(४२) गतमिदं पुरस्तात् (३७) ग. C. D. F ।
(४४) नास्त्येवैतत् ग. C. D. F ।
(४६) इतोऽनन्तरमेव "धमति (५०)" ग. C. D. F ।
(५०) गतमिदं पुरस्तात् (४६) ग. D. C. F ।
(५१) "मिनोति"—इत्यपि टीकाकृत्सम्मतम् । एतस्यैव स्थाने "चिणोति"—इति ग. C. D. E ।
(५२) "रिखति" F ।
(५३),(५४) इह न स्त एव इमे ग. C. D. F ।
(५६) "वेश्लिष्टि" ख. ग. च. C. D. F । "वेषिष्टि" ङ ।
(५७) "योश्लिष्टि" ख ।
(५८) "ऋणाति" D. F । इतोऽनन्तरमिह "ऋणर्ति" ग. D. F "ऋणत्ति" C. इहेव "इयर्त्ति (७८)"—इत्यपि ग. C. D. F ।
(६०) "नेदति" ग. C. D. F ।
(६१) "दध्यति" ग. F । इतोऽनन्तरं "नख्यति"—इत्यधिकश्च ।
(६२) "दभ्नोति" ग. C. D. F ।
(६३) "युध्यते" ग. C. D. F ।

धन्वति[६४]। अरुषति[६५]। आर्यति[६६]। सीयते[६७]। तकति[६८]। दीयति[६९]। ईषति[७०]। फणति[७१]। हन्-ति[७२]। अर्दति[७३]। मर्दति[७४]। सस्रुते[७५]। नसते[७६]। ह्वर्यति[७७]। इयर्ति[७८]। ईर्त्ते[७९]। ईङ्खते[८०]। जयति[८१]। श्वात्रति[८२]। गन्ति[८३]। आगनीगन्ति[८४]। जङ्गन्ति[८५]। जिन्वति[८६]। जसति[८७]। गमति[८८]। ध्रति[८९]। ध्राति[९०]। ध्रयति[९१]। वहते[९२]। रथर्यति[९३]। जेहते[९४]। ष्वः-

---

६५) "अरुष्यति" ख. च. टीकादिसम्मतमपि। "अर्षति" ग. C. D. F।

(६६) "अलर्षति" ग D. F। "अलर्षति" C.।

(६७) "डीयते" कातिरिक्तसर्वपुस्तकेषु।

(६८) "द्रीयते" ग. C. D. F।

(७१) "कणति" C. D. F।

(७२) "स्रवति" ग. C. D. F।

(७३) "स्रिवति" ग. C D. F।

(७४) "ध्वति" ग. C. D. F।

(७५) "धावति" ग. C. D. F।

(७६) "ह्रस्यति,' ग. C. D F।

(७७) "हर्यति" ग. C. D. F।

(७८) गतमिदं पुरस्तात् (५८) ग. C. D. F।

(८०) एतदपि नास्त्येव ग. C. D. F।

(८४) "गनीगन्ति" ग. C. D. F। "आगनीगन्ति"—इत्यपि परस्तादस्ति (११२) ग. C. D. F।

(८६) "जगाति" ग. C. D. F।

(८७) 'जगति" ग. C. D. E।

(८८) इतोऽनन्तरम् "मिनति (५९)" ग. C. D. F।

(९२) "भ्रुवति" ग. C. D. F। इतोऽनन्तरं "वल्गूयति" ग. C. D. F।

(९३) "अथर्यति" ग. C. D. F। इतोऽनन्तरम् "ईंखते" ग. C D. F।

(९४) "जेहति" ग. C.। इतोऽनन्तरम्—"वदति"। "एति (१२०)"। "तूर्वति"। "एजति (१०३)"। "वञ्चति (१०५)"।

कंति[९५]। क्षुम्पति[९६]। स्नाति[९७]। वाति[९८]। याति[९९]। इषति[१००]। द्राति[१०१]। द्रूळति[१०२]। एजति[१०३]। जमति[१०४]। जवति[१०५]। वञ्चति[१०६]। अनिति[१०७]। पवते[१०८]। हन्ति[१०९]। सेधति[११०]। अगन्[१११]। अजगन्[११२]। जिगाति[११३]। पतति[११४]। इन्वति[११५]। द्रमति[११६]। द्रवति[११७]। वेति[११८]। हन्तात्[११९]। एति[१२०]। जगायात्[१२१]। अयथुः[१२२]। इति द्वाविंशशतं गतिकर्माणः* ॥ १४ ॥

अत्र वर्त्तते इत्यादीनां गत्यर्थानां गतिकर्मकत्वं स्कन्दस्वामिना प्रतिपादितम् । अनेकार्थत्वाद्वा गतिकर्मत्वम् । एष्वप्रदर्शितनिगमानां

---

(९५) "षःकति" ग. D. F। "ष्वष्कति" C. ।
(९६) "च्चिम्पति" ख. च ।
(१००) "जायति" ग. C. D. F।
(१०१) "पतयति" ग. C. D. F ।
(१०२), (१०३), (१०४), (१०५), (१०६), (१०७).—इमानीह न सन्ति ग.C.D.F ।
(१०८) "स्रवति" D ।
(११२) इतोऽनन्तरम्—"आगनीगन्ति (८४)" । "गाति (३९)" ग. C. D. F ।
(११४) गतमिदं पुरस्तात् पाठभेदेन (३९) ग. C. D. F ।
(११५) "व्रजति" ग. C. D. F ।
(११७) "द्रूवति" C. D. F। इतोऽनन्तरम्—"द्रुम्मति (१०२)" ग. C D. F।
(११९) "हयन्तात्"—इति सर्वत्रैव, परं टीकायामप्राधान्येन स्वीकृतम् ।
(१२०) गतमिदं पुरस्तात् (९४) ग. C. D. F।
(१२२) "अयुथुः" ख. ङ. च । "अयुथुः" ग. C. D. F।
* "इति गतिकर्माणः" ग ।

निगमा अन्वेषणीयाः । अनुक्तविकरणानां भ्वादित्वं ज्ञेयम्, अनुक्तौ परस्मैपदित्वञ्च ॥

(१) वर्त्तते* । 'वृतु वर्त्तने (भ्वा०)' आत्मनेपदी ॥

(२) अयते† । (३) लोटते । (४) लोठते ॥

(५) स्यन्दते । 'स्यन्दू प्रस्रवणे (भ्वा०)' । आत्मनेपदी । "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४,४,२८,३)"—इति निगमः ॥

(६) कसति । 'कस गतौ (अदा० प०)' ।

(७) सर्पति‡ । 'सृप्लृ गतौ (भ्वा० प०)' । "नमो अस्तु सर्पेभ्यः ( ? )"—"अहिर्न जूर्णामति सर्पति त्वचम् (ऋ० सं० ७,३,२०,४)"—इति निगमौ ॥

(८) स्यमति ।

(९) स्रवति । 'स्रु गतौ (भ्वा० प०)' । "अवस्रवेद् घशंसो वतरम् (ऋ० सं० २,१,१७,१)"—इति निगमः ॥

(१०) स्रंसते । 'स्रंसु अवस्रंसने (भ्वा०)' आत्मनेपदी । "जातेन जातमति स प्र सर्स्रते (ऋ० सं० २,७,४,१)"—इति निगमः । 'स्रसतिरन्तर्णीतण्यर्थः'—इति हरदत्तः ॥

(११) अवति§ । 'अव रक्षणगत्यादौ (भ्वा० प०)' "प्रावन् वाणीः

---

* निरु० ९, ८; १०, २२ ।

† निरु० ४, १६; ७, २१; ८, ३; ९, १५; ९, ३२; ११, १८; १२, ११; १२, २७ ।

‡ निरु० ६, १७ ।

§ १० ८ ।

पुरुहूतं धमन्तीः (ऋ० सं० ३,२,२,५)"—"तं घेदग्निर्वृधावति (ऋ० सं० ६,५,२६,४)"—इति निगमौ॥

(१२) स्रोतति*। 'स्रुतिर् चरणे (भू० प०)'। "स्रोतन्ति ते वसे स्तोकाः (ऋ० सं० ३,१,२१,५)"—इति निगमः॥

(१३) ध्वंसति†।

(१४) वेनति‡। नैरुक्तधातुः। "आ प्र द्रव हरिवो मा वि वेनः (ऋ० सं० ४,१,२८,२)"—"नासत्या मा वि वेनतम् (ऋ० सं० ४,४,१६,२)"—इति निगमौ॥

(१५) मार्ष्टि§। 'मृज शुद्धौ' अदादिः। "मृगो न भीमः (ऋ० सं० २,२,२४,२)"—"उरावन्तरिक्षे मर्जयन्त (ऋ० सं० ५, ४,६,३)"—इति निगमौ॥

(१६) भुरण्यति‖। 'भुरण धारणपोषणयोः' कण्ड्वादिः। "भुरण्यन्तं जनाँ अनु (ऋ० सं० १,४,८,१)"—"शुचिर्वां स्तोमो भुरणावजीगः (ऋ० सं० ७,७,२२,१)"—इति च निगमौ॥

(१७) श्रवति¶। 'श्रव गतौ'। 'श्रु गतौ'—इति स्कन्दस्वामी। "मा भेम श्रवसस्पते (ऋ० सं० १,१,२१,२)"—इति निगमः॥

(१८) कालयति**। 'काल क्षेपे' चुरादिरदन्तः। व्यत्ययेन

---

* निरु० ५, ११।

† निरु० ४, २।

‡ पृ० ६।

§ निरु० १, २०; १२, ४२।

‖ निरु० १२, २१।

¶ पृ० ३, ५। निरु० २, २; ३, ८; ४, १३।

** निरु० २, २५।

स्थानिवद्भावाद्वृद्धिः। "तं काले कालश्रागते यते ( ? * )"—इति निगमः। 'कालः कालयतेर्गतिकर्मणः (निरु० २,२५)'—इति यास्कः॥

(१९) पेलयति† । 'पेल्ट फेल्ट शेल्ट गतौ (भ्वा०प०)'। "वयांसि पक्वा गन्धेन पिपीलिकाः प्रशाद ( ? ‡ )"—इति निगमः। 'पिपीलिका पेलतेर्गतिकर्मणः (निरु० ७,१३)'—इति यास्कः॥

(२०) कण्टति§ । 'कटि गतौ (भ्वा०प०)'। "यातुधानेभ्यः कण्टकीकारीम् (य०वा०स० ३०,८)"—इति निगमः। 'कण्टकः कन्तपोवा कृन्ततेर्वा कण्टतेर्वा स्याद् गतिकर्मणः इति निरुक्तम् (९,३२)। 'कण्टति पश्यति परान्'—इति स्कन्दस्वामी॥

(२१) पिस्यति। 'पिसृ पेसृ गतौ (भ्वा०प०)'। व्यत्ययेन श्यन्॥

(२२) बिस्यति‖। (२३) मिस्यति। 'बिस प्रेरणे', 'मसी परिमाणे' दिवादिः। मिस्यतीतीकारश्छान्दसः। "इयं शुष्मेभिर्बिसखा इवारुजत् (ऋ०सं० ४,८,२०,२)"—इति निगमः। अत्र 'बिस्यतिर्गतिकर्मसु पठ्यते'—इति स्कन्दस्वामी। ऋग्भाष्ये—बिस्यति मिस्यति इमौ नैरुक्तधातू॥

---

* अथ० सं० १९,५३–५४. सूक्तद्वयं द्रष्टव्यम्। ऋ०सं ७,९,४. अत्र च।
† निरु० ७,१३।
‡ ऋ०सं० ७,६,११,१. विचार्य्यः। अथ० सं० ७,५६,७. द्रष्टव्यश्च।
§ निरु० ९,३२।
‖ निरु० २,२४।

(२४) प्रवते*। (२५) प्लवते। (२६) च्यवते। 'च्युङ् च्युङ् प्रुङ् प्लुङ् ल्लुङ् क्लुङ् गतौ (भू० आ०)'। "अभि प्रवन्त समनेव योषाः (ऋ० सं० ३,८,११,३)"—"तिस्रः पृथिवीरुपरि प्रवा दिवः (ऋ० सं० १,३,५,२)"—इति निगमौ॥

(२७) कवते†। 'कुङ् गतिशोषणयोः (भू० आ०)'। "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४,४,३०,३)"—इति निगमः। 'कवतेर्गतिकर्मणः कवन्धमुदकम्'—इति स्कन्दस्वामी॥

(२८) गवते।

(२९) नवते। 'णु स्तुतौ' अदादिः (प०)। 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः, आत्मनेपदन्तु व्यत्ययेन। "प्र धेनव उदप्रुतो नवन्त (ऋ० सं० ५,४,९,१)"—इति निगमः॥

(३०) चोदति। 'चुदिर् सम्प्रेषणे' रुधादिः, स्वरितेत्। व्यत्ययेन शप्। "चोदन्त आपो रिणते वनानि (ऋ० सं० ४,३,२३,६)"—इति निगमः॥

(३१) नक्षति‡। 'नक्ष गतौ (भू० प०)'। "शफच्युतो रेणुर्नक्षत द्याम् (ऋ० सं० १,३,३,४)"—इति निगमः॥

(३२) सश्चति§। 'षच समवाये' स्वरितेत् (भू०)। 'सिप् बहुलं लेटि (३,१,३४)', 'लेटोऽडाटौ (३,४,९४)'। नैरुक्तधातुर्वा।

---

* निरु० ७, १०।

† निरु० ५, २६।

‡ प० १८। निरु० २, २०; १०, २१।

§ प० अत्रैव २४; २, २९। निरु० २, २१; ५, ९; ७, २२; ९, २९; ९. ३२; ११, ४९।

"सश्चादेव प्र ण्स्युरः (ऋ० सं० १,३,२४,१)"—इति निगमः। 'सश्चतेः सचते र्वा गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३३) स्यश्चति*। स्यश्चेर्गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३४) सचति। सच समवाये (भ्वा० उ०)'। "अच्छिन्नपत्राः सचन्ताम् (ऋ० सं० १,२,६,१)"—"अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १,५,१६,२)"—इति निगमौ। सचत्यृच्छतीति गति-कर्मसु पाठात्'—इति स्कन्दस्वामी॥

(३५) ऋच्छति। 'ऋ गतिप्रापणयोः (भ्वा० प०)'। 'पाघ्राध्मा (७,३,७८)'-इत्यादिसूत्रेण ऋच्छादेशः। वाचा स्तेनं शरव ऋच्छन्तु (ऋ० सं० ८,४,७,५)"—इति निगमः॥

(३६) तुरीयति। नैरुक्तधातुः॥

(३७) चतति†। 'चते याचने' स्वरितेत्। "दूराद्दूरमचीचतम् ( ? )"—इति निगमः। 'चततिर्गत्यर्थे च'—इति भट्टभास्कर-मिश्रः॥

(३८) अतति। 'अत सातत्यगमने'। "अयमु ते समतसि (ऋ० सं० १,२,२८,४)"—इति निगमः॥

(३९) गाति‡। 'गाङ् गतौ (अदा० आ०)'। व्यत्ययेन परस्मै-पदी। "निर्यत्—पूतेव स्वधितिः शुचिर्गात् (ऋ० सं० ५,२,४, मि ..२)"—इति निगमः॥

---

* प० ४, १। निरु० ६, १५।
† निरु० ६, १०।
‡ निरु० २, १९; ६, ११; १०, २६; २७; १२, १९।

(४०) इयक्षति* । 'यज पूजायाम्' तुदादिरात्मनेपदी । व्यत्ययेन परस्मैपदम् । 'छन्दस्युभयथा (३,४,११७)'—इति हि आर्द्धधातुकत्वात् णि-लोपः । यजेः सनि वा रूपम्, अभ्यासस्य सम्प्रसारणं व्यत्ययेन । "कुविमियक्षसि प्रयज्यो (ऋ० सं० ४,८,५,४)"—इति निगमः । 'गतिकर्मा'—इति हरदत्तः ॥

(४१) सश्चति† । सचतेरेव छान्दसः शकारउपजनः । "असंश्चन्ती भूरिधारे पयस्वती (ऋ० सं० ५,१,१४,२)"—"ऋजीषिणं वृषणं सश्चतः श्रिये (ऋ० सं० १,५,८,२)"—इति निगमौ ॥

(४२) त्सरति‡ । 'त्सर छद्मगतौ (भू० प०)' । "अभि त्सरन्ति धेनुभिः (ऋ० सं० ५,७,१८,१)"——"अवत्सरत्स्पृशत्यश्चिकित्वान् (ऋ० सं० १,५,१५,५)"—इति निगमौ ॥

(४३) रंहति§ । 'रहि गतौ (भू० प०)' । "महस्तमाः शतमा अस्य रंहिः (ऋ० सं० ८,८,३६,३)"—"पुरोहरिभ्यां वृषभोरथो हिषः (ऋ० सं० १,४,१७,३)"—इति निगमौ । 'रथो रंहतेर्गतिकर्मणः (निरु० ९,११)'—इति भाष्यम् ॥

(४४) यतते‖ । 'यती प्रयत्ने' आत्मनेपदम् (भू०) । "हंसा इव श्रेणिशो यतन्ते (ऋ० सं० २,३,१२,५)"—"मित्रं न यातयज्जनम् (ऋ० सं० ६,७,११,२)"—इति निगमौ ॥

---

* निरु० २, १४ ।

† प० ४, २ । निरु० ५, १ ।

‡ निरु० ५, २ ।

§ निरु० ९, ११ ।

‖ प० १९ । निरु० १०, २२ ।

(४५) भ्रमति। 'भ्रमु चलने (भ्रू०प०)'। "भ्रमिरस्युस्मिन्नन्धानाम् ( ? )"—इति निगमः॥

(४६) भ्रजति*। 'भ्रज भ्रजि गतौ (भ्रू०प०)'। "भ्राजिरेकस्य ददृशे न रूपम् (ऋ०सं०२,३,२२,४)"—"अहिर्धुनिर्वात इव भ्रजीमान् (ऋ०सं०१,५,२७,१)"—इति निगमौ॥

(४७) रजति†। (४८) लजति‡। (४९) क्षियति§॥

(५०) धमति‖। 'धमिः सौत्रः'—इति स्कन्दस्वामी। यद्वा; 'ध्मा शब्दाग्निसंयोगयोः (भ्रू०प०)'। 'पाघ्राध्मास्था (७,३ ७८)'—इत्यादिना धमादेशः। "प्रातृन्वाणीः पुरुहूतं धमन्तीः (ऋ०सं०३,२,२,५)"—"निःषीमद्भ्यो धमथो निःषधस्थात् (ऋ०सं०४,१,३०,४)"—इति निगमौ॥

(५१) मिनाति¶। 'मीञ् हिंसायाम्'। 'मीनातेर्निगमे (७,३,८१)'—इति ह्रस्वः। "मिनोति"—इति पाठान्तरम्। तत्र 'डु मिञ् क्षेपणे' स्वादिः। "सप्तचक्रं रथमविश्वमिन्वम् (ऋ०सं०२,८,६,३)"—इति निगमः। 'मीनातेरेतद्रूपम्, सर्वेणापि लोके नावगन्तुमशक्यम्'-इति हरदत्तः॥

(५२) ऋण्वति। 'ऋवि रवि गतौ (भ्रू०प०)'। 'इदितो

---

* निरु० १२, २०।

† प० ३, १४।

‡ निरु० ६, ९।

§ निरु० २, ६; ५, ३; ९, १०; १०, १२; १०, १४।

‖ प० १९; ३, १४। निरु० ६, २।

¶ प० १९। निरु० ७, २९।

नुम् धातोः (७,१,५८)', 'रयेर्मतौ बहुलम् (६,१,३४वा०)'—इति बहुलवचनात् सम्प्रसारणम्। "व्यानुषग् वायो दे॒व ऋण्वति (ऋ० सं० १,४,२३,३)"—इति निगमः। 'ऋण्वतिर्गतिकर्मा, अन्तर्णीतण्यर्थः। विविधं गमयति'—इति स्कन्दस्वामि-भाष्यम्॥

(५३) ऋणोति। 'ऋण गतौ' तनादिः स्वरितेत्। "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)'—इति लघूपधगुणाभावः "अभि कृष्णेन रजसा द्यामृणोति (ऋ० सं० १,३,७,४)"—"ऋणो रपो अनवद्यार्णाः (ऋ० सं० २,४,१६,२)"—इति निगमौ। उभयोरपि 'ऋणोतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम्॥

(५४) स्वरति*। 'स्वृ शब्दोपतापयोः'। "हरी इन्द्रप्रतद्वसू अभिस्वर (ऋ० सं० ६,१,१२,२)"—इति निगमः॥ अत्र 'गतिकर्मा'—इत्युक्तं स्कन्दस्वामी। "अनिमेषं विदथाभि स्वरन्ति (ऋ० सं० २,३,१८,१)"—इत्यादौ 'गतिकर्मस्वपठितोऽपि गत्यर्थः'—इत्युक्तम्॥

(५५) सिसर्त्ति†। 'ऋ सृ गतौ' जुहोत्यादिः। 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)', 'बहुलं छन्दसि (७,४,७८)'—इति अभ्यासस्येत्वम्। "प्र बाहवा सिसृतं जीवसे न (ऋ० सं० ५,५,४,५)"—इति निगमः॥

(५६) विषिष्टि‡। 'विष्लृ व्याप्तौ' जुहोत्यादिः (उ०)। लेटि 'सिब्बहुलं लेटि (३,१,३४)'। "अग्ने संवेविषोरयिम् (ऋ० सं०

---

* प० २, १४। निरु० २, १२।
† निरु० १, १९; १०, २।
‡ निरु० १०, ४६।

६,५,२६,१)"—इति निगमः। 'समन्तात् प्रापय'—इति भट्ट-भास्करमिश्रः॥

(५७) योषिष्टि। 'युष हिंसायाम् (भू० प०)'। लेटि सिपि व्यत्ययेन गुणः॥

(५८) रिणाति*। 'री गतिरेषणयोः' क्र्यादिः स्वादिश्च। "ऋघायमाणो निरिणाति शत्रून् (ऋ० सं० १,४,२९,३)"—"लोपा-मुद्रा वृषणं नीरिणाति (ऋ० सं० २,४,२२,४)"—इति निगमौ॥

(५९) रीयते। 'रीङ् श्रवणे' दिवादिः। "एदु निम्नं न रीयते (ऋ० सं० १,२,२८,२)"—इति निगमः। 'रीयते रेजतीति गतिकर्मसु पाठात् गत्यर्थः'—इति स्कन्दस्वामि-भाष्यम्॥

(६०) रेजति†। नैरुक्तधातुः। "हव्यो नय दूषत्रान् मन्म रेजति (ऋ० सं० २,१,१७,१)"—'चलति गच्छतीत्यर्थः'—इति स्कन्द-स्वामी॥

(६१) दध्यति‡। 'दघ पालने' स्वादिः। व्यत्ययेन श्यन्। "पश्चाद्दघा यो अघस्य धाता (ऋ० सं० २,८,४,५)"—इति च निगमः॥

(६२) दभ्नोति§। 'दम्भु दम्भे' स्वादिः॥

(६३) युध्यति। 'युध सम्प्रहारे' दिवादिरात्मनेपदी, व्यत्ययेन परस्मैपदी॥

---

* निरु० ३, ५।
† निरु० १०, ४२।
‡ निरु० १, ७; ९।
§ प० १९। निरु० ५, १२।

(६४) धन्वति । 'रिवि रवि धवि गत्यर्थाः (भ्वा०प०)'। "परि सोम प्र धन्वा स्वस्तये (ऋ०सं० ७,२,३३,५)"—"न यस्य द्यावापृथिवी न धन्व (ऋ०सं० ८,४,१५,१)"—इति च निगमौ ॥

(६५) अरुषति* । नैरुक्तधातुः । "वि धूममग्ने अरुषं मियेध्य (ऋ०सं० १,३,६,४)"—"स्वसारः श्यावी मरुषीमजुषन् (ऋ०सं० १,५,१५,१)"—"प्रतीचीरग्नेररुषीरजानन् (ऋ०सं० १,५,१८,१०)"—इत्यादिषु स्कन्दस्वामिभाष्यम्—'अरुषतिर्गतिकर्मा'—इति दृष्टम् । "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ०सं० १,१,११,१)"—इत्यादौ द्वित्रयोः प्रदेशयोः 'अरुष्यतिर्गतिकर्मा'—इत्यपि । उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् अरुषतीति पाठोयुक्तः ॥

(६६) आर्यति । "मामार्यन्ति कृतेन कर्त्वेन च (ऋ०सं० ८,१,५,३)"—"तमित्पृणीनैराञ्चरार्यन्ति (ऋ०सं० ६,१,२१,६)"—इति च निगमौ ॥

(६७) सीयते । 'षिञ् बन्धने' स्वादिः क्र्यादिश्च । व्यत्ययेन श्यन् । "डीयते"—इति पाठान्तरम् । तदा 'डीङ् विहायसां गतौ' दिवादिः । निगमदर्शनान्निर्णयः ॥

(६८) तकति । 'तक हसने (भ्वा०प०)' । "यः पूर्भिता परितक्म्येव धने (ऋ०सं० १,२,३३,१)"—"अन्योन्यान्मत्सर्गप्रतक्तौ ( ? )"—इति निगमौ ॥

(६९) दीयति ('दीङ् क्षये' दिवादिः । व्यत्ययेन परस्मैपदम् ।

---

* प० ३, ७ । पु० १, ८. निरु० १२, ७ ।

"श्येनो न दीतन्नन्वेति पाथः (ऋ० सं० ५,५,५,५)"–इति निगमः॥

(७०) ईषति*। "ईष गतिहिंसादानेषु' आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "उतानीगा ईषते वृषणावतः (ऋ० सं० ४,४,२७,२)"—इति निगमः। बहुषु 'ईषतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(७१) फणति†। 'फण गतौ'। "यथामङ्क्षास्य न्वापनीफणत् (ऋ० सं० ३,७,१४,४)"—इति निगमः॥

(७२) हनति‡। 'हन हिंसागत्योः' अदादिः। 'बहुलं छन्दसि (२,४,७३)'–इति शपोलुग् न भवति। "सं यद्धनन्त मन्युभिर्जनासः (ऋ० सं० ५,४,२६,२)"—इति निगमः॥

(७३) अर्दति§। 'अर्द गतौ याचने च'॥

(७४) मर्दति‖। 'मृद मर्दने'। व्यत्ययेन परस्मैपदम्॥

(७५) सर्स्रते¶। 'ऋ सृ गतौ' जुहोत्यादिः परस्मैपदी। व्यत्ययेनात्मनेपदम्। पृषोदरादित्वात् (६,३,१०९) अभ्यासस्य रुगागमः। "प्र सर्स्राते दीर्घमायुः प्रयक्षे (ऋ० सं० ३,१,१,१)"–"जातेनं जात मति स प्र सर्स्रते (ऋ० सं० २,७,४,१)"—इति निगमौ॥

---

* "ईषते" निरु० ४, २; ९, ८; १०, ११।
† निरु० २, २८।
‡ निरु० २, १७; ६, २; ७, २२; ९, २०।
§ "अर्दयति" प० १९।
‖ प० १९। "मृदुः" निरु० २, २।
¶ अत्रैव पृ० ५५।

(७६) नसते*। 'नस कौटिल्ये' आत्मनेपदी। "अक्षीभ्यां ते नासिकाभ्याम् (ऋ० सं० ८,८,२१,१)"—इति निगमः॥

(७७) हर्यति†। 'हर्य गतिकान्त्योः'॥

(७८) इयर्त्ति‡। 'ऋ सृ गतौ' जुहोत्यादिः। 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)'। "कृष्टीरियर्त्त्योजसा (ऋ० सं० १,१,१४,३)"—इति निगमः॥

(७९) ईर्त्ते। 'ईर गतौ कम्पने च' अदादिरात्मनेपदी। "मत्स-रासः प्रसुपः साकमीरते (ऋ० सं० ७,२,२२,१)"—इति निगमः॥

(८०) ईङ्खते। 'ईखि गतौ' (भ्वा०) आत्मनेपदी। "य ईङ्ख-यन्ति पर्वतान् (ऋ० सं० १,१,३७,२)"—इति निगमः। अत्र 'ईङ्खतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम्॥

(८१) ज्रयति। (८२) ध्राजति। एतौ नैरुक्तधातू॥

(८३) गन्ति§। 'गम्लृ गतौ (भ्वा० प०)'। व्यत्ययेन शपोलुक्। "अङ्गिरोभि रागहि यज्ञियेभिः (ऋ० सं० ७,६,१४,५)"—इति निगमः॥

(८४) आगनीगन्ति‖। 'गम्लृ गतौ (भ्वा० प०)'। दाधर्त्ति-

---

* "नसतः" प० ४, १। "नसन्तः" ७, १० निरु०।

† निरु० ७, २०; ७, १७; ११, १५।

‡ निरु० ९, ४।

§ "गमध्यै" निरु० २, ७। "जग्मुषः" निरु० १२, ४२।
"आगच्छान्" निरु० ४, ५०। "आगन्" निरु० ५, २।
"आगत" निरु० १२, ४०। "आ गन्तन" निरु० ११, १५।
"आजग्मुः" निरु० १२, ४२। "आगनीगन्ति" निरु० ९, १८।
"समग्मत" निरु० १२, ३४। "सञ्जग्मानः" निरु० ४, १२।

‖ द्रष्टव्यम् पुरस्तादिहैव (८३)।

दर्धर्त्ति (७,४,६५) इत्यादिना आङ्पूर्वस्य गमेर्लटि अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते। यङ्लुगन्ताद्वा लटि निपातनाद्रूपसिद्धिः। "वक्ष्यन्ती वेदा गनीगन्ति कर्णम् (ऋ० सं० ५,१,१९,३)"—इति निगमः॥

(८५) जङ्घन्ति*। गमेर्यङ्लुकि 'नुगतोऽनुनासिकान्तस्य (७,४,८५)'—इति नुकि च रूपम्। "प्रातर्मक्षू धियावसुर्जगम्यात् (ऋ० सं० १,४,२४,४)"—इत्यत्र 'जङ्घन्तेर्गतिकर्मण एतद्रूपम्'—इति स्कन्दस्वामि-भाष्यम्।

(८६) जिन्वन्ति†। 'इवि जिवि धिवि प्रीणनार्थाः (भू० प०)'॥

(८७) जसति। 'जसु मोक्षणे' दिवादिः (प०)। व्यत्ययेन शप्॥

(८८) गमति‡। 'गम्लृ गतौ (भू० प०)'। लेट्। 'लेटोऽडाटौ (३,४,९४)'। बाहुलकात् 'सिब्बहुलं लेटि (३,१,३४)'—इति सिप् न भवति। यद्वा; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति छ्लाभावः। "त आ गमन्तु तइह श्रुवन्तु (ऋ० सं० ४,८,५,१)"—इति निगमः॥

(८९) ध्रति। (९०) ध्राति। (९१) ध्रयति। त्रयोऽपि नैरुक्ताः॥

(९२) वहते§। 'वह प्रापणे' (भू० उ०) स्वरितेत्। "वैश्वानरं

---

* पु० द्रष्टव्यमिहैव (८३)।

† प० ४, २। निरु० ६. २२। "प्रजिनोषि" निरु० ११, २७।

‡ पु० द्रष्टव्यमिहैव (८३)।

§ "वचि" निरु० ८, १९। "आ वक्षत्" निरु० ९, ४२; ४३। "वक्षतु" निरु० १२, ८; ११। "वक्षि" निरु० २, ४; ६; ८, २।

मातरिश्वा परावतः (ऋ० सं० ४,५,१०,४)"—इत्यत्र 'परापूर्वस्य वहतेर्गतिकर्मणः परावच्छब्दः'—इति स्कन्दस्वामी ॥

(९३) रथर्यति* । नैरुक्तधातुः । 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजन ईडाभावश्च पृषोदरादित्वात् (६,३,१०९)'—इति स्कन्दस्वामी । "एष देवो रथर्यति (ऋ० सं० ६,७,२०,५)"—इति निगमः । माधवभाष्यं द्रष्टव्यम् ॥

(९४) जेहते । 'वेहृ जेहृ वाहृ प्रयत्ने' आत्मनेपदी । "ये तांरूषुर्देवत्रा जेहमाना (ऋ० सं० ७,६,१८,४)"—इति निगमः । 'ओ हाङ् गतावित्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(९५) श्वःकति । (९६) चुम्पति† । (९७) प्साति । (९८) वाति‡ । (९९) याति§ ॥

(१००) इषति‖ । 'इष गतौ' दिवादिः(प०) । व्यत्ययेन शः । "तचास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ५,१,२१,१)"—इति निगमः ॥ 'इषुरिषतेर्गतिकर्मणः (९,१८)'—इति निरुक्तम् ॥

(१०१) द्राति¶ । 'द्रा कुत्सितायां गतौ' अदादिः(प०) । वंस्वयेवामतयो दस्म दद्रुः (ऋ० सं० १,५,३,१)"—इति निगमः ॥

---

* प० ४, ३ । निरु० ६, २८ ।
† प० ४, २ । निरु० ५, १६ ।
‡ निरु० २, २४ ; ३, ५; ११, २३ ।
§ प० ३, १९ । निरु० २, १ ; ३, १९ ।
‖ निरु० ९, १८ ; "इषितः" ८, ८ ।
¶ निरु० २, ३ ।

(१०२) द्रूऊति। नैरुक्तधातुः॥

(१०३) एजति*। 'एजृ कम्पने (भ्वा०प०)'। "यूथेन वृष्णिरेजति (ऋ०सं०१,१,१८,२)"—"यथा समुद्र एजति (ऋ० सं०४,४,२०,३)"—इति निगमौ॥

(१०४) जमति†। 'जमु अदने (भ्वा०प०)'। "न जामये तान्वोरिक्थमारैक् (ऋ०सं०३,२,५,२)"—इति निगमः। 'जामिर्जमतेर्गतिकर्मणः'—इति स्कन्दस्वामी॥

(१०५) जवति‡। 'जु गतौ'—इति क्षीरस्वामी। "न पातव इन्द्र जुजूर्तु नः ( ? )"—"विपाट् छुतुद्री पयसा जवेते (ऋ० सं०३,२,१२,१)"—इति निगमौ॥

(१०६) वञ्चति। 'वञ्चु गतौ (भ्वा०प०)'। "नमो वञ्चते परिवञ्चते (य०वा०सं०१६,२१)"—इति निगमः॥

(१०७) अनिति§। 'श्वस प्राणने, अन च (अदा०प०)'। "अच मातर्यालनिति ( ? )"—इति निगमः। 'अनितिर्गतिकर्मा —इति माधवः॥

(१०८) पवते‖। 'पूङ् पवने'। "नेन्द्रादृते पवते धाम किञ्चन (ऋ०सं०७,२,२२,१)"—"स्तकं संशाप पविमिन्द्र तिग्मम् ( ? )"—इति निगमौ॥

य.वा०सं.१८।७१

---

* निरु० २, १६।

† निरु ३, ६। "जमत्" पु० १, १७।

‡ "जवेते" निरु० ९, ३९।

§ निरु० ११, ४७।

‖ "पवस्व" ३, २०।

(१०९) हन्ति*। 'हन हिंसागत्योः' अदादिः (प०)। "नि येन मुष्टिहत्यया (ऋ०सं०१,१,१५,२)"—"आस्य वज्र मधिसानौ जघान (ऋ०सं०१,२,२७,२)"—इति निगमौ ॥

(११०) सेधति। 'षिधु गत्याम् (भू०प०)'। "सेधतं द्वेषो भवतं सचा भुवा (ऋ०सं०१,३,५,५)"—इति निगमः ॥

(१११) अगन्†। 'गम्लृ गतौ (भू०प०)'। लुङि तिपि च्लेः 'मन्त्रे घस (२,४,८०)'—इति लुकि, 'इतश्च (३,४,९७)'—'संयोगान्तलोपः (८,२,२३)', 'मोनोधातोः (८,२,६४)'—इति मकारस्य नकारः। यदामागन् प्रथमजा ऋतस्य (ऋ०सं०२,३,२१,२)"—इति निगमः ॥

(११२) अजगन्‡। गमेर्लुङि 'बहुलं छन्दसि (२,४,७३)'—इति शपः श्लुः। पूर्ववन्नत्वम् (८,२,६४)। "यस्मादृते अजगन्नपः (ऋ०सं०३,१,५,२)"—इति निगमः ॥

(११३) जिगाति§। 'गा स्तुतौ(अदा०प०)'। छन्दसि जुहोत्यादिः। 'अर्त्तिपिपर्त्त्योश्च (७,४,७७) 'बहुलं छन्दसि (७,४,७८)', —इति अभ्यासस्येत्वम्। "धेना जिगाति दाशुषे (ऋ०सं१,१,३,२)" —इति निगमः। 'जगतीति पाठान्तरम्'—इति स्कन्दस्वामिभाष्यम् ॥

---

* "जघन्वस्" निरु० २, १०; ७, २२; "हन्तोः" ६, १; "आजङ्घन्ति", "उपजिघ्नते" ९, २०।

†, ‡ इहैव पुरस्तात् (७२)।

§ इहैव पुरस्तात् (२९)।

(११४) पतति*। 'पत्लृ गतौ (भू०प०)'। "गोभिः सन्नद्धा पतति प्रसूता (ऋ०सं० ५,१,२१,१)"—इति निगमः॥

(११५) इन्वति†। 'इवि गतौ (भू०प०)'। "देवीर्द्वारो इन्वतीर्विश्वमिन्वा (य०वा०सं०२९,३०)"—इति निगमः॥

(११६) द्रमति। 'द्रम हम्म मीमृ गतौ (भू०प०)'। "प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ०सं० ८,३,२३,४)'—इति निगमः। 'चन्द्रमाश्चायं द्रमति'—इति भाष्यम् (निरु० ११,५)। 'द्रमति-र्गतिकर्मा'—इति स्कन्दस्वामी॥

(११७) द्रवति‡। 'द्रु गतौ (भू०प०)'। "यत्रा नरः सं च वि च द्रवन्ति (ऋ०सं० ५,१,२१,१)"—इति निगमः॥

(११८) वेति§। 'वी गतिप्रजननकान्त्यशनखादनेषु' अदादिः। "अपामीवां बाधते वेति सूर्यम्"—"पदं न वेत्योदती (ऋ०सं० १,४,४,१)"—इति निगमौ॥

(११९) इन्तात्। इन्तेर्लोटि तातङि रूपम्। "इयन्तात्"—इति केचित् पठन्ति। तत्र 'इय गतौ (भू०प०)'—इत्यस्य तातङि तकार उपजनः॥

(१२०) एति‖। 'इ गतौ' अदादिः (प०)। "विचाकशच्चन्द्रमा नक्तमेति (ऋ०सं०१,२,१४,५)"—इति निगमः।

---

* "व्यापप्तत" निरु० ११, १४।

† प० १८।

‡ निरु० ४, १५; १९।

§ पु० २, ९।

‖ पु० १४।

(१२१) जगायात्*। 'गा स्तुतौ' जुहोत्यादिः (प०)। लिङि 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वेन 'ई हल्यघोः (६,४,११३)'—इतीत्वं न भवति। "स्वाग्निः पुनरस्तं जगायात् (ऋ०सं० ७,७,२०,१)"—इति निगमः॥

(१२२) अयथुः। 'द्वितोऽथुच् (३,३,८९)'—इति बाहुलकादयतेरथुच् भवति॥

इति द्वाविंशशतं गतिकर्माणः॥ १४॥

नु[१]। मक्षु[२]। द्रवत्[३]। ओषम्[४]। जीराः[५]। जूर्णिः[६]। शूर्ताः[७]। शूघनासः[८]। शीभम्[९]। तृषु[१०]। तूयम्[११]। तूर्णिः[१२]। अजिरम्[१३]। भुरण्युः[१४]। शु[१५]। आशु[१६]। प्राशुः[१७]। तूतुजिः[१८]। तूतुजानः[१९]। तुज्यमानासः[२०]। अज्राः[२१]। साचिवित्[२२]। द्युगत्[२३]।

---

* इहैव पुरस्तात् (२९)।

(५) "जिराः" ख।
(८) "शुघनसाः" ख। "शूघनाः" ग. C. D F। "शूघनाशः" च।
(१०) "त्रिषु" C। (११) "तोयम्" ग. C. D. F।
(१२) "तूर्णि" ख. ग।
(१३) "अजिरम्" ख।
(१५) "शूः" ग। (१६) "आशुः" ख. ग. च. C. D. F।
(१७) "प्राशुचित्" ग. C. F। "प्राशुवित्" D।
(१८) "जूतुजित्" ग. C. D. F।
(१९) "तूतुजानासः" ग. C. D. F।
(२१) "अजराः" ख।
(२२) "साचीवित्" ङ. च। "साचीवत्" ग।
(२३) "युगत्" ग. iid।

ताजत्[२४] । तरणिः[२५] । वातरंहा[२६] । इति षड्विंश-तिः क्षिप्रनामानि* ॥ १५ ॥

'क्षिप्रनामान्युत्तराणि षड्विंशतिः (निरु० ३,९)'—इत्यत्र भाष्ये 'गुणस्य चैतानीति क्षिप्रस्य तद्वतो वा नामधेयानि । तथाच वक्ष्यति 'भुरण्युः' 'शकुनिः'—इति स्कन्दस्वामी । गुणश्च चिरकालविशिष्टा स्वल्पकालविशिष्टा वा क्रिया । तत्कर्त्तरि कर्त्तुरल्पकालविशिष्टत्वञ्च तथाविधक्रियाकर्तृत्वाल्यक्रियाद्वारकम् । तत्र 'मक्षु' 'क्षुणुहि' इत्या-दिषु क्रियाविशेषेण वा क्रियारूपस्तद्वान् । निकृष्टगुणनामधेयोदा-हरणानि पुनरन्वेषणीयानि । केचित्तु यद्यपि गुणशब्दो व्यवच्छेदक-मात्रवचनतया ह्यत्र कर्त्तृविशेषणभूतक्रियालक्षणा व्यवच्छेदकविशेषे वर्त्तते निकृष्टा गुणमात्रवाचिनि गम्यादौ लभ्या ; तथापि सत्वशब्दस्य द्रव्यवचनत्वे स्वारस्यात् क्रियायाश्चाद्रव्यत्वात् क्रियाया इव द्रव्यस्यापि नामधेयानि'—इत्याहुः । इदानीं क्रियाविशेषणानि गुणनामधेयो-दाहरणानि 'जीराः' 'अजिरम्' इत्यादीनि ॥

(१) नु† । निपातोऽयम् । "इन्द्रस्य नु वीर्याणि प्रवोचम् (ऋ० सं० १,२,३६,१)"—इति निगमः ॥

(२) मक्षु । 'टु मस्जो शुद्धौ (तु०प०)' । 'मस्जीषोषुक्' इति भोजसूत्रेण षुक्-प्रत्ययः । संयोगादिलोपः । अन्तर्णीतण्यर्थश्च मस्जो ।

---

* "इति क्षिप्रस्य" ग ।

† प० २, १२ निरु० १, ४ ; ११, ५० । "नु कम्" ३, १२ । "न च"—"नू चित्" प० ४, १ ; निरु० ४, १० ; १०, ३ ।

क्रियाया; पापतो वा मज्जयति चिरकालमिति। "मत्तु क्षुणु हि गोजितौ नः ( ? * )"—इति निगमः॥

(३) द्रवत्*। 'द्रु गतौ (भू०प०)'। 'संश्चत्-तृम्पद्-वेहत् (उ० २,७९)'—इति बाहुलकात् अति-प्रत्ययान्तो निपात्यते। द्रवत्यनेन। * * *। "द्रवत्पाणी शुभस्पती (ऋ०सं०१,१,५,१)—इति निगमौ॥

(४) ओषम्। निपातोऽयम्। "ओषमित् पृथिवीमहम् (ऋ० सं०८,६,२७,४)"—"ओषः पात्रं न शोचिषा (ऋ०सं०२,४, १८,३)"—इति निगमौ। 'अन्तोदात्तो निपातः स्वादाख्याने चाद्युदात्तता'—इति हि माधवः॥

(५) जीराः। जवतिर्गतिकर्मा। 'जोरी च (उ०२,२५)'—इति ईक्-प्रत्यय ईकारस्यान्तादेशः। जस्। "जीरा अजिरशोचिषः (ऋ०सं०७,२,११,५)"—"जीरं दूतममर्त्यम् (ऋ०सं०१,३,३, ३०,११)"—इति निगमौ॥

(६) जूर्णिः†। व्याख्यातं क्रोधनामसु (२३५पृ०)। निगमोऽन्वेषणीयः॥

(७) शूर्त्ताः। 'तातव्रातसुत'—इत्यादि भोजसूत्रे आदिशब्देन शृणात्यस्मात् क्त-प्रत्ययान्तो निपात्यते। शृणाति फललाभम्। "त्वया शूर्त्ता वहमाना अपत्यम् (ऋ०सं०२,४,१७,१)"—इति

---

* "आ वो मक्षू तनाय कम् (ऋ० सं० १, ६, १९, २)"—इत्यपि निगमो भवितुमर्हति।

† पृ० १४ (११७)।

‡ पृ० १३।

निगमः। 'शूर्त्ताः क्षिप्रास्त्वरमाणाः'—इति भट्टभास्करमिश्राः॥

(८) शूघनासः। सु शब्दे उपपदे हन्तेः 'युच् बहुलम् (उ० २,७४)"—इति युचि बाहुलकात् कुत्वं णिलोपश्च निपात्यते दीर्घश्च। शीघ्रमागच्छत्यनेन क्रियाफलम्। तस्मात् जसोऽसुक्। "सिन्धोरिव प्राध्वने शूघनासः (य० वा० सं० १७,९५)"—इति निगमः। 'शूघनासः क्षिप्रगमनाः'—इत्युवटः॥

(९) शीभम्। 'शीभ कत्थने (भ्वा० आ०)'। घञ्। शीभ्यतेऽनेन तद्वान्। "प्रयात शीभमाशुभिः (ऋ० सं० १,३,१४,४)"—"आ वक्षणाः पृणध्वं यात शीभम् (ऋ० सं० ३,२,१४,२)"—इति निगमौ॥

(१०) तृषु*। 'ञि त्वरा सम्भ्रमे (भ्वा० आ०)'। 'मस्जीषोषुक्'—इति बाहुलकात् षुक्-प्रत्ययो धातोस्तृभावश्च। तरत्यनेन फल-लाभमद्य, त्वरतेऽनेन फलमागन्तुम्। "तृष्वविष्यन्नतसेषु तिष्ठति (ऋ० सं० १,४,२,२)"—"तृष्वीमनु प्रसितिं द्रूणानः (ऋ० सं० ३,४,२२,१)"—इति निगमौ॥

(११) तूयम्†। व्याख्यातमुदकनामसु (१२८पृ०)। वर्द्धतेऽनेन तद्वन्तः श्लाघ्याः। "आपिले नः प्रपिले तूयमा गहि (ऋ० सं० ५,७,३०,३)"—इति निगमः॥

(१२) तूर्णिः‡। 'ञि त्वरा सम्भ्रमे'। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो

---

* निरु० ६, १२।

† पृ० १, १२।

‡ निरु० ७, १७।

नित् (उ० ४,५१)'—इति नि-प्रत्ययः । त्वरतेऽनेन फलमागन्तुम् । "अपो यत्तूर्णिश्चरति प्रजानन् (ऋ० सं० ८,४,११,१)"—"सुतमा गन्त तूर्णयः (ऋ० सं० १,१,६,२)"—इति निगमौ ॥

(१३) अजिरम्* । 'अज गतिक्षेपणयोः (भू० प०)' । 'अजिर-शिशिरशिथिलस्थिरस्फिरस्थविरखदिराः (उ० १,५३)'—इति कि-रच्-प्रत्ययो जि-भावश्च निपात्यते । क्षिपति फलोत्पत्तिमाद्यम् । "त्वा मीळ्हते अजिरं दूत्याय (ऋ० सं० ५,२,१४,२)"—इति निगमः ॥

(१४) भुरण्युः† । भुरण्यतिर्गतिकर्मा । 'मृगय्वादयश्च (उ० १, ३६)'–इति क्यु-प्रत्ययः । "येना पावक चक्षसा (ऋ० सं० १,४, ८,१)"—इत्यत्र स्कन्दस्वामिना 'भुरण्यतिः शीघ्रकरणार्थे'—इति प्रतिपादितम् । तत्र 'भुरण्यु-शब्दस्य शीघ्रविशिष्टगमनादिक्रियाकर्त्तरि सत्यन्येव वृत्तिः । "श्रीणन्नुपस्थाद्दिवं भुरण्युः (ऋ० सं० १,५,१२, १)"–इति निगमः । 'भुरण्यतेर्गतिकर्मण इदं, क्षिप्रनाम वा'—इति स्कन्दस्वामिभाष्यम् ॥

(१५) शुः‡ । निपातः । "श्वानं बस्तो बोधयितारं मब्रवीत् (ऋ० सं० २,३,६,३)"—इति निगमः । 'शु आशुगामी'—इति निरुक्तम् (६,१) ॥

(१६) आशुः§ । 'अशू व्याप्तौ' । 'कृवापाजिमिस्वदिसाध्य-

---

* पु० १, १२ ।
† निरु० १२, २२ ।
‡ निरु० ६, १ ।
§ पु० १, १४ ।

शूङ्भ्य उण् (उ० १,१) । व्याप्नोत्यनेन नरत्वेलक्षणेन व्याप्तव्यम् । 'आशु इदं क्षिप्रनाम क्षिप्रगामी'—इति स्कन्दस्वामिभाष्यम् । आशु इति च शब्दस्वरूपापेक्षया नपुंसकनिर्देशः । तेन आशु इति निपातः, आशुरिति सत्ववाची च उभयमपि पठितं भवति । तथा च स्कन्द-स्वामी "समाशुमाशवे भर (ऋ० सं० १,१,८,२)"—इत्यत्र ऋग्भाष्ये 'आशुमिति क्षिप्रनामैतत्'—इति । 'आशु इति शु इति च क्षिप्र-नामनी भवतः'—इति भाष्ये (निरु० ६,१) निर्विवक्षयोपन्यास इति चेत् ? न; निपातत्वादिति चोक्तत्वात् । "त्वमग्ने द्युभिस्त्वमाशुशु-क्षणिः (ऋ० सं० २,५,१७,१)"—इति निगमः ॥

(१७) प्राशुः* । 'सत्ववाच्याशुशब्दवत्'—इति भाष्ये प्रक-र्षार्थोऽतिरिक्तः । 'हस्तो हन्तेः प्राशुर्हनने (निरु० १,७)'—इति भाष्ये 'प्राशुः क्षिप्रः'—इति स्कन्दस्वामी । "सुप्राव्यः प्राशुषाळेष वीरः (ऋ० सं० ३,६,१४,१)"—इति निगमः ॥

(१८) तूतुजिः । 'तुज तुजि हिंसायाम् (भ्वा० प०)' । 'किं किनोः प्रकरणे'—इत्यर्थे 'छन्दसि सदादिभ्यो दर्शनात्'—इति किन् प्रत्ययः । लिड्वद्भावात् द्विर्वचनम् । "तुजादीनां दीर्घोऽभ्यासस्य (६, १,७)'—इति दीर्घः । तूर्णवदर्थः । "आयुक्षाता मश्विना तूतुजिं रथम् (ऋ० सं० ७,८,७, १)"—इति निगमः ॥

(१९) तूतुजानः† । तोजतेर्लिटि कानजादेशः । "इन्द्रा याहि तूतुजानः (ऋ० सं० १,१,५,६)"—इति निगमः । 'क्षिप्रार्थे स्वर

---

* निरु० १,७ ।

† निरु० ६, २० ।

आदित अन्तोदात्तः तुगर्थस्तूतुजानो मह्रे मतः'—इति माधवः ॥

(२०) तुज्यमानासः । तोजतेरेव कर्मणि लटि शानच्। "तुज्यमानास आविषुः (ऋ० सं० १,१,२१,५)"—इति निगमः ॥

(२१) अज्राः । अजतेः 'स्फायितञ्चिवञ्चि (उ० २,१२)'—इत्यादिना रक्। 'बाहुलकादार्द्धधातुके विकल्प इष्यते'—इति वैकल्पिकत्वात् वीभावाभावः । अजिरवदर्थः । "द्यौर्न भूमिं गिरयो नाज्रान् (ऋ० सं० ८,१,२२,३)"—इति निगमः। 'अज्रान् सत्वरान् शीघ्रान्'—इति भट्टभास्करमिश्रः ॥

(२२) साचीवित् । (२३) द्युगत् । (२४) ताजत् । त्रयो निपाताः। साचीविदित्यस्य निगमोऽन्वेषणीयः ॥ "अतस्त्वा गीर्भिर्द्युगदिन्द्रकेशिभिः (ऋ० सं० ६,६,३६,४)"—इति निगमः। अत्र माधवस्तु—'द्युगत् दीप्तिं द्युलोकं गच्छ हरिभिः'—इति चैतद्भाष्ये उक्तवान्। 'तूतुजानः तरणिः द्युगत्'—इति क्षिप्रनामसु द्युगच्छब्दस्तेनाप्यपाठि ॥ "ताजत्——मार्च्छति ( ? )"—"ताजत् प्रमीयते ( ? )"—इति निगमौ ॥

(२५) तरणिः । तरतेः 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २,९५)'—इत्यनि-प्रत्ययः। त्वरवदर्थः। "विश्वी शमी तरणित्वेन वाघतः (ऋ० सं० १,७,३०,३)"—"तरणिर्विश्वदर्शतः (ऋ० सं० १,४,७,४)"—इति निगमौ ॥

(२६) वातरंहा । 'वा गतिगन्धनयोः (अदा० प०)' । 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् (उ० ३,८४)'—इति तन् । 'रमु क्रीड़ायाम् (भू० आ०)'; 'रमेस्च [वेगे] (उ० ४,२०८)'—इत्यसुन्

ऌगागमश्च। वातवत् रंहो यस्य सः। "वातरंहसो दिव्यासो अत्याः (ऋ॰सं॰ २,४,२५,२)"—इति निगमः॥

इति षड्विंशतिः क्षिप्रनामानि॥ १५॥

तळित्(१)। आसात्(२)। अम्बरम्(३)। तुर्वशे(४)। अस्तमीके(५)। आके(६)। उपाके(७)। अर्वाके(८)। अन्तमानाम्(९)। अवमे(१०)। उपमे(११)। इत्येकादशान्तिकनामानि*॥ १६॥

(१) तळित्†। 'तड आघाते' चुरादिः। 'ताडेर्णिलुक् च (उ॰ १,९५)'—इतीति-प्रत्ययः। "दूरे चित् सन्तळिदिवाति रोचसे (ऋ॰सं॰१,६,२१,२)"—"या नो ददे तळितो य अरातयः (ऋ॰सं॰२,६,२०,४)"—इति निगमौ॥

(२) आसात्। 'आस उपवेशने (अदा॰आ॰)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)। अन्तिके आसते। "आ न इन्द्रो दूरादान आसात् (ऋ॰सं॰३,६,३,१)"—"स नो दूराच्चासाच्च (ऋ॰सं॰१,२,२२,३)"—इति निगमौ। 'आसादित्यन्तिकनाम'—इति स्कन्दस्वामिभाष्यम्। 'आसादासेः'—इति माधवः॥

---

(१) "तलित्" ख. ग. च।
(२) "आसा" ग. C. F।
(४) "तुर्वशः" च।
(८) "अर्वाकः" च।
* "इत्यन्तिकस्य" ग।
† निरु॰ ३, १०. "तळितः" ३, ११।

(३) अम्बरम्* 'कदरादयश्च'—इत्यरन्-प्रत्ययो मुगागमश्च निपात्यते । प्राप्यते ह्यासन्नम् । "यन्नासत्या परावति यद्वा स्थो अध्यम्बरे (ऋ० सं० ५,८,२७,४)"—इति निगमः । स्कन्दस्वामि-व्यतिरिक्तभाष्यकारमते । स्कन्दस्वामी तु 'अन्तरिक्षनाम'—इति ॥

(४) तुर्वशे† । व्याख्यातं मनुष्यनामसु (१८२पृ०) ॥ तूर्णं व्याप्यते अन्तिकम् । "यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे (ऋ० सं० १,४,२,२)"—इति निगमः ॥

(५) अस्तमीके । अस्तं-शब्दे उपपदे मातेः 'अलीकादयश्च (उ० सं० ४,२५)'—इति वीकन्प्रत्ययो धातोर्लोपश्च निपात्यते । अस्तं प्राप्यते अस्मिन्, अन्तिकस्थं हि नाश्यते । "सचस्व नः पराक आ सचस्वास्तमीक आ (ऋ० सं० २,१,१७,४)"—इति निगमः ॥

(६) आके‡ । (७) उपाके§ । (८) अर्वाके । आङुपार्वच्छ-ब्देषूपपदेषु क्रामतेः 'बलाकादयश्च (उ० ४,१४)'—इति आक-प्रत्ययो धातोर्लोपश्च निपात्यते । अर्वाक् गन्ता । आक्रम्यते उपक्र-म्यते गन्तृभिः । क्रम्यते च ह्यासन्नम् । "आके नियामो अहभि-र्दविद्युतः (ऋ० सं० ३,७,२१,६)"—"सिन्धोरूर्मा उपाक (ऋ० सं० १,२,२३,१)"—"यन्नासत्या पराके अर्वाके अस्ति भेषजम् (ऋ० सं० ५,८,३२५)"—इति च निगमः ॥

(९) अन्तमानाम् । अन्तिकशब्दात्तमपि 'तमोदश्च'—इति

---

* पु० १, ३ ।
† पु० २, ३ ।
‡ प० ३, २६ ।
§ निरु० ८, ११ ।

तादिलोपः। अन्तिकतममन्तिमम्। "अर्यात् अन्तमानाम् (ऋ० सं० १,१,७,३)"—"शिवा सखो अन्तमस्य (ऋ० सं० १,२,२२,५)"—इति निगमौ। आद्युदात्तमन्तिकम्, अन्तोदात्तन्तु तृतीया-बहुवचनम्;"अतो वयमन्तमेभिर्युजानाः (ऋ० सं० २,३,२४,५)"—इति माधवः॥

(१०) अवमे। 'अव रक्षणादिषु (भू० प०)'। 'अवेस्तु वा इति म-प्रत्ययः। गम्यते ह्यासन्नम्। "अस्मै बह्रूनामवमाय सख्ये (ऋ० सं० २,७,२४,२)"—"मध्यमस्यामवमस्यामुत स्थः (ऋ० सं० १,७,२७,५)"—इति निगमौ॥

(११) उपमे। उपपूर्वात् मिनातेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। उपच्छिद्यते ह्यन्तिकम्। "उपमे रोचने दिवः (ऋ० सं० ६,६,२,४)"—"अस्मादहृत्यसुपमं स्वर्षाम् (ऋ० सं० १,४,२७,३)"—इति निगमौ॥

इत्येकादशान्तिकनामानि॥ १६॥

रणः(१)। विवाक्(२)। विखादः(३)। नदनुः(४)। भरे(५)। आक्रन्दे(६)। आहवे(७)। आजौ(८)। पृतनाज्यम्(९)। अभीके(१०)। समीके(११)। ममसत्यम्(१२)। नेमधिता(१३)। सङ्काः(१४)। समितिः(१५)। समनम्(१६)। मीळ्हे(१७)। पृतनाः(१८)। स्पृधः(१९)। मृधः(२०)। पृत्सु(२१)। समत्सु(२२)।

---

(१३) "नेमधितिः" ग. C. D. F।

(२१) "पृत्सुधः" ग. C D. F।

(२२) अस्यैतत् 'संयुगे(२९)"—इत्यस्यानन्तरम् ग. C. D. F।

समर्ये[२३]। समरणे[२४]। समोहे[२५]। समिथे[२६]। सङ्खे[२७]। सङ्गे[२८]। संयुगे[२९]। सङ्गथे[३०]। सङ्गमे[३१]। वृत्रतूर्ये[३२]। पृक्षे[३३]। आणौ[३४]। शूरसातौ[३५]। वाजसातौ[३६]। समनीके[३७]। खले[३८]। खजे[३९]। पौंस्ये[४०]। महाधने[४१]। वाजे[४२]। अज्म[४३]। सद्म[४४]। संयत्[४५]। संवतः[४६]। इति षट्चत्वारिंशत् सङ्ग्रामनामानि* ॥ १७ ॥

(१) रणः† । 'अण रण कण शब्दार्थाः (भ्वा० प०)'। 'वशिरण्यो रुपसङ्ख्यानम् (३,३,५८वा०)'—इत्यप्। 'रणन्ति दुन्दुभयोऽत्र योधा वा परस्परं शब्दायन्ते। यद्वा; रमतेः 'रास्नासास्नास्थूणावीणाः (उ० ३,१३)'—इत्यादिना न-प्रत्ययो मकारलोपश्च निपात्यते। रमणीयो हि सङ्ग्रामो विचित्रकर्माधिष्ठानत्वात्। "मरुत्वाँ

(२५) "सम्मोहे" क–E. अनयोरन्यत्र।
(२६) अस्त्येतत् "सद्म"–इत्यनन्तरम् "समीथे"–इति ग. C. D. F।
(२७) कातिरिक्त-सर्वत्रैव "सङ्ख्ये" इति।
(३०) ग. C. D. F. अस्त्येतत् "संयत्"—इत्यस्य पुरस्तात्।
(३१) नास्त्येतत् ग. C. D. F।
(३४) इतोऽनन्तरम् "प्रधने"–इत्यधिकम् ग. C. D. F।
(४३) "अग्मन्" ग. C. F।
(४४) "सग्मन" ग. C. F। "स्यग्मन्" D।
(४५) "संयतः" ग. C. F।
(४६) "संवतम्" ग.।
* "इति सङ्ग्रामस्य" ग।
† निरु० ४, ८; ९, १७; १०, ४७।

इन्द्र वृषभोरणाय (ऋ० सं० ३, ३, ११, १)"—इति निगमः ॥

(२) विवाक्। विविधा विरुद्धा वाचो यत्र योधानाम्। "हवन्त उ त्वा हव्यं विवाचि (ऋ० सं० ५, ३, १४, २)"—इति निगमः ॥

(३) विखादः। 'खद स्थैर्ये हिंसायाञ्च (भ्रू० प०)'। विशिष्टं स्थैर्यमत्र शूराणां हिंसनं वा। "तं विखादे सस्निं मद्य श्रुतं नरम्। (ऋ० सं० ७, ८, १४, ४)"—इति निगमः ॥

(४) नदनुः। 'णद अव्यक्ते शब्दे (भ्रू० प०)'। 'अनुङ् नदेश्च (उ० ३, ४९)'—इति चानुङ्-प्रत्ययः। "यदा कृणोषि नदनुं समूहसि (ऋ० सं० ६, २, ३, ४)"—इति निगमः ॥

(५) भरे*। 'डु भृञ् धारणपोषणयोः (जु० उ०)'। 'नन्दि-ग्रहिपचादिभ्यः (३, १, १३४)' तत्र गणपाठाः—'पच-वच-वप-वद-लप-तज-भराः'—इति। बिभर्त्ति पोषयति सुभटानां धैर्यं यशो वा। यद्वा; 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)'। बिभ्रत्यनेन जय लक्ष्मीं योधाः। उभयत्रापि पृषोदरादेराकृतिगणत्वादाद्युदात्तत्वम् यद्वा; 'भृ भर्त्सने क्र्यादिः स्वादिश्च। भर्त्सयन्ते हि तत्र शत्रवः। हरते र्वा भः। ह्रियन्ते हि तत्र योधाना मायूंषि धनानि च। 'हृग्रहो र्भश्छन्दसि (३, १, ८४ वा०)'। "अस्मिन् भरे नृतमं वाजसातौ (ऋ० सं० ३, २, ४, ७)"—"अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३, ७, ११, ५)"—इति निगमौ ॥

(६) आक्रन्दे। 'कदि क्रदि क्लदि आह्वाने रोदने च (भ्रू०

---

* निरु० ४, २४।

आ०)' । क्रन्दन्त्याक्रयन्तेऽन्योन्यमत्र, रुदन्ति त्वानेन बन्धुविनाश-हेतुत्वात् । निगमोऽन्वेषणीयः ॥

(७) आहवे* । 'ह्वेञ् स्पर्द्धायाम् (भ्व०उ०)' । 'आङि युद्धे (३,३,७३)'—इत्यप् । "बहुलं छन्दसि (६,१,२४)'—इति सम्प्रसारणञ्च । आह्वयन्तेऽत्र परस्परं स्पर्द्धया योधाः । "न कश्चन संहत आहवेषु (ऋ०सं० ४,७,३०,१)"—इति निगमः ॥

(८) आजौ† । 'अज गतिक्षेपणयोः (भ्व०प०)' । 'अज्यतिभ्याञ्च (उ०४,१२७)'—इति इण्-प्रत्ययः । बाहुलकाद् वी-भावाभावः । अजन्ति गच्छन्त्यत्र विजयश्रियं योद्धारः, कातराः पराभवं वा । एव मर्थो गत्यर्थेषु द्रष्टव्यः । क्षिप्यन्ते शस्त्राणि क्षिपन्त्याक्षिपन्ति वान्योन्यं वीर्यतारतम्यात् । * * * । "तेन वाजं सनिषदस्मिन्नाजौ (ऋ० सं० ८,३,७,४)"—इति निगमः ॥

(९) पृतनाज्यम्‡ । पृतना-शब्दोपपदादञ्जतेश्च अघ्न्यादित्वात् (उ०४,१०८) यत्-प्रत्ययः । पृतनानां सेनानामजनं यत्र । "गवां मुद्गलः पृतनाज्येषु (ऋ०सं० ८,५,२१,३)"—इति निगमः ॥

(१०) अभीके§ । अभिपूर्वादेतेः 'अलीकादयश्च (उ०४,२५)'—इतीक-प्रत्ययो धातोर्लोपश्च निपात्यते । यद्वा; न विद्यते भीर्येषां ते अभीकाः । अभीकैः क्रियमाणत्वात् अभीकमित्युच्यते ।

---

* निरु० २, १७ । "आह्वावः" ५. २६ ।

† निरु० ९, २३ ।

‡ निरु० ९, २४ ।

§ प० २, २९ । निरु० ३, २० ।

"पाहि वज्रिवो दुरितादभीके (ऋ० सं० १,८,२६,४)"—इति निगमः ॥

(११) समीके । सं पूर्वोऽत्र एतिः । अभीकवत् । निगमोऽन्वेषणीयः ॥

(१२) ममसत्यम् । मम सत्यं जयः इति योद्धृणां वाक्यविषयत्वान्ममसत्यमित्याचक्षते । पृषोदरादिः । "त्वां जना ममसत्येष्विन्द्र (ऋ० सं० ७,८,२२,४)"—इति निगमः ॥

(१३) नेमधिता* । 'सुधितवसुधितनेमधितधिष्वधिषीय च (७,४,४५)'—इति नेमपूर्वाद्दधातेः त-प्रत्यये इत्वमिडागमो वा निपात्यते । नेमशब्दो दानपर्यायः । सप्तम्येकवचनस्याकारादेशः (७,१,३९)। "इन्द्रन्नरो नेमधिता हवन्ते (ऋ० सं० ५,३,११,१)"—"विदन्मर्त्तो नेमधिता चिकित्वान् (ऋ० सं० १,५,१७,४)"—"नेमधिता न पौंस्या (ऋ० सं० ८,४,२८,१३)"—इति निगमाः ॥

(१४) सङ्काः† । सचतेर्गतिकर्मणः * * * बाहुलकादङ्कप्रत्ययष्टिलोपश्च । यद्वा ; संपूर्वात् किरतेः कृन्ततेर्वा 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः । सङ्कीर्य्यन्तेऽत्र योद्धारः, सम्यक् कृत्यन्ते छिद्यन्ते आयुधैर्वा । "इषुधिः सङ्काः पृतनाश्च सर्वाः (ऋ० सं० ५,१,१९,५)"—इति निगमः ॥

---

* "नेमः" प० ३, २९ । निरु० ३. २० ।

† निरु० ९, १४ ।

(१५) समितिः । सम्पूर्वादेतेः क्तिन् । "राजानः समिताविव (ऋ० सं० ८,५,९,१)"—इति निगमः ॥

(१६) समनम्* । 'सम ष्टम अवैक्लव्ये (भू० प०)' । समन्ति विक्लवा भवन्त्यस्मिन् शूराः । * * * । "ज्या इयं समने पारयन्ती (ऋ० सं० ५,१,१९,३)"—इति, "वि या सृजति समनं (ऋ० सं० १,४,४,१)"-इति च निगमौ ॥

(१७) मीळ्हे† । "मीळ्हम्"—इति धननामसु व्याख्यातञ्च (२२४पृ०) । मीळ्हार्थत्वात् सङ्ग्रामोऽपि मीळ्हम् । यद्वा; मीळ्हमस्मिन्नस्तीति 'लुगकारेकाररेफाश्च (४,४,१२८वा० २)'—इति मत्वर्थीयस्य लुक् । "प्रधने"—इत्यपठितमपि सङ्ग्रामनाम । प्रकीर्णान्यस्मिन्निति आभरणरूपेण चूडामणिकटकविक्षेपात् । "स्वमीळ्हे नर आजा हवन्ते (ऋ० सं० १,५,५,१)"—इति निगमः । 'स्वर्मीळ्हे' । स्वरित्युदकनाम । उदकार्थे सङ्ग्रामे आजौ अन्यस्मिन्नपि सङ्ग्रामे'–इति स्कन्दस्वामिभाष्यम् । "स जामिभिर्यत्समजाति मीळ्हे (ऋ० सं० १,७,१०,१)"–इति च ॥

(१८) पृतनाः‡ । 'पृङ् व्यायामे (तु० आ०)' । 'पृपूसां कित्'—इति तनन् प्रत्ययः । व्याप्रियन्तेऽत्र योद्धारः । "रणाय निघ्नन् पृतनासु शत्रून् ( ? )"—इति निगमः ॥

(१९) स्पृधः । 'स्पर्द्ध सङ्घर्षे (भू० आ०)' । 'क्विब्वचिप्रच्छि-

---

* निरु० ९, १४; १८; ४०; ७, १७ ।

† पृ० २, १० ।

‡ निरु० ९, २४ ।

(३,२,१७८वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः (३,२,१७८भा०)'—इत्युक्तः क्विप्। पृषोदरादित्वात् रेफस्य ऋकारोऽलोपश्च। शसि स्पृधः। स्पर्द्धन्तेऽत्र परस्परं योद्धारः। "जयेम संयुधि स्पृधः (ऋ०सं० १,१,१५,३)"—इति निगमः। 'स्पृध इति सङ्ग्रामनाम, 'तत्करोति (३,१,२५वा.०२)'—इति णिजन्तात् क्विप्; सङ्ग्रामकारिण इत्यर्थः—इति स्कन्दस्वामिभाष्यम् ॥

(२०) मृधः*। 'अमर्द्धन्ता सोमपेयाय देवा (ऋ०सं० ३,१,२५,४)'—'सिंहो न पातममृध्रम् (ऋ०सं० ३,१४,१)'—इत्यादौ 'मृधिर्हिंसार्थः'—इति स्कन्दस्वामि-भाष्यम्। तत्र पूर्ववत् क्विप् शस्। "अयं सुतः सुमखमा मृधस्कः (ऋ०सं० २,६,२१,४)"—"वि नं इन्द्र मृधो जहि (ऋ०सं० ८,८,१०,४)"—इति निगमौ ॥

(२१) पृत्सु। पृतनाशब्दस्य सङ्ग्रामनामसु पठितोऽपि 'नासिका-पृतना-सानूनां नस्-पृत्-स्नवो वाच्याः (६,१,६३वा०)'—इति पृदादेशे विकृतत्वात् पुनःपाठः। "यमग्ने पृत्सु मर्त्यम् (ऋ०सं० १,२,२३,२)"—इति निगमः ॥

(२२) समत्सु†। सम्पूर्वादत्तेः क्विप् सम्भक्षयन्ति योद्धृणामायूंषि। सम्पूर्वान्मदी हर्षे इत्यस्माद्वा क्विपि समो मलोपः। संहृष्यन्ति तत्र सुभटाः। "समत्सु त्वा हवामहे (ऋ०सं० ५,८,३६,३)"—"धन्वना तीव्राः समदो जयेम (ऋ०सं० ५,१,१९,२)"—इति निगमौ ॥

* निरु० ७,२।

† निरु० ९,१७; १०।

(२ ३) समर्ये । मर्यशब्दो मनुष्यनामसु व्याख्यातः (१८० पृ०) मर्यैः मरणधर्मिभिः सह वर्त्तते; सहशब्दस्य स-भावः । "मास्मै तादृगपगूहः समर्ये (ऋ० सं० ७,७,१९,४)"—"तव स्वधाव इयमासमर्ये (ऋ० सं० १,५,७,१)"—इति निगमौ ॥

(२ ४) समरणे* । सम्पूर्वात् 'ऋ सृ गतौ (भ्व० प०)'—इत्यस्मात् ल्युट् । "मां हुताः समरणे ह्वन्ते (ऋ० सं० ३,७,१७,५)"—इति निगमः ॥

(२ ५) समोहे । 'उहिर् दुहिर् अर्द्दने (भ्व० प०)' । नञ्-पूर्वादुहे घञ् । सम्यगुह्यन्ते अर्द्यन्तेऽत्र मिथो योद्धारः । 'अग्निगव ओहम् (ऋ० सं० १,४,२७,१)'—इत्यादौ वहेरिदं रूपमिति स्कन्दस्वामी । स च सम्पूर्वाद्वहेर्घञि पृषोदरादित्वात् सम्प्रसारणे लघूपधगुणः । समुह्यन्तेऽत्र रथादिना सुभटाः, सुभटैर्वा कवचानि । "समोहे वा य आशत (ऋ० सं० १,१,१६,१)"—इति निगमः । 'अन्तोदात्तं सङ्ग्रामनाम, मध्योदात्तं णमुलन्तम्'—इति माधवः । "इयर्त्ति रेणुं मघवा समोहम् (ऋ० सं० ३,५,२३,३)"—इति णमुलन्तम् ॥

(२ ६) समिथे† । सम्पूर्वादेतेः 'समीणः (उ० २,१०)'—इति थक् । "यदन्यरूपः समिथे बभूथ (ऋ० सं० ५,६,२५,६)"—"स इन्महानि समिथानि मज्मना (ऋ० सं० १,४,१९,५)"—इति निगमौ ॥

---

* निरु० ११, ८ ।

† निरु० ५, ८; ६, १० ।

(२७) सङ्के। सम्पूर्वात् चक्षिङः 'अन्येष्वपि दृश्यते (३,२,१०१)' —इति डः, 'बहुलं सञ्ज्ञाच्छन्दसोः (२,४,५४वा०)'—इति ख्याञा-देशः; पृषोदरादित्वाद्यकारलोपः। सम्पूर्वस्य चिर्वजनार्थः। सञ्चक्ष्यते कातरैः। यद्वा; सम्पूर्वात् अश्नोतेः 'डिच्च'—इति ख-प्रत्ययः, टि-लोपेन धातुलोपः। समश्नुवतेऽस्मिन्नन्योन्यं योद्धारः। निगमोऽन्वेषणीयः॥

(२८) सङ्गे। सम्पूर्वाद् गमेर्डः 'अन्येष्वपि दृश्यते (३,२,१०१)' —इति डः, पूर्ववद् वा। "सङ्गे समत्सु वृत्रहा (ऋ०सं०८,७,२१,१)"—इति निगमः॥

(२९) संयुगे। 'युजिर् योगे (रु०उ०)', घञ्। उञ्छादिषु युगशब्दस्य पाठात् निपातनादगुणत्वम्; 'विशेषेऽसौ निपातनमिष्यते, कालविशेषे रथाद्युपकरणे च'—इति वृत्तिः। सङ्गता रथयुगा यस्मिन्। निगमोऽन्वेषणीयः॥

(३०) सङ्गथे। सम्पूर्वात् 'गूथ यूथ प्रोथ पृष्ठादयः'*—इति थ-प्रत्ययान्तो निपात्यते। "आ ये वामस्य सङ्गथे (ऋ०सं०२,८,६,५)"—इति निगमः॥

(३१) सङ्गमे†। सम्पूर्वाद् गमेः 'ग्रहवृदृनिश्चिगमश्च (३,३,५८)' —इत्यप्। "जैत्रं यन्तो अनुमदाम सङ्गमे (ऋ०सं०१,७,१४,३)" —इति निगमः॥

(३२) वृत्रतूर्ये‡। वृत्रशब्दो मेघनाम, अत्रासुरः शत्रुवचनः। मेघनामसु व्याख्यातः (७२पृ०)। 'तुरि गतित्वरहिंसयोः (दि०

* कौमुदीपाठस्त्वेवम्—'तिथपृष्ठगूथयूथप्रोथाः (उ० २, १२)" इति।
† निरु० १०, २९। ‡ पृ० १, १०।

आ०)', अघ्न्यादित्वात् (उ० ४,१०८)। वृत्रस्तूर्यतेऽनेनास्मिन् वा। "इन्द्रोऽवृणीत वृत्रतूर्ये ( ? )"—यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये ( ? )"—इति निगमौ* ॥

(३३) पृत्से। 'पृची सम्पर्के (रु०प०)'। 'स्नुवृश्चिकृत्यृषिभ्यः कित् (उ० ३,६२)'—इति बाहुलकात् स-प्रत्ययो भवति। सम्पृचन्तेऽस्मिन् परस्परं योद्धारः। निगमोऽन्वेषणीयः† ॥

(३४) आणौ‡। 'अण रण क्वण शब्दार्थाः (भू०प०)'। 'अविशिविपलिघसिजम्यणिपनिभ्य इण्'। रणवदर्थः। "त्वं शुष्णं वृजने पृक्ष आणौ (ऋ०सं०१,५,४,३)"—इति निगमः। 'आणौ इति सङ्ग्रामनाम'—इति स्कन्दस्वामि-भाष्यम् ॥

(३५) शूरसातौ§। 'शूर गतौ (सौत्रः)'—इत्यस्मात् 'शुसिचिमीनां दीर्घश्च (उ०२,२४)'—इति रन्-प्रत्ययः। 'षणु दाने (त०उ०)'। 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च (३,३,९७)'—इति सनोतेः 'जनसनखनाम् (६,४,४२)'—इत्यात्वे कृते स्वरो निपात्यते। स्यते वा 'द्यतिस्यति (७,४,४०)'—इतीत्वाभावश्च। शूराणां सातिः वेतनादानं मरणं वा येन। "यः शूरसाता परितक्म्ये (ऋ०सं०१,२,३३,१)"—इति निगमः ॥

---

* इमौ तु बह्वनुसन्धानेनाप्यस्माभिर्न लभ्येते, परं सन्त्येवास्य बहवो निगमा ऋग्वेदसंहितायाम्। तथाहि—"वृत्रतूर्ये" २, २६, २। ६, १२, १; १८, ६; २४, ५; ६१, ५। ८, २४; १९, २०; ७४, ९; १२। १०, ६६, ८; १०४, ९। "वृत्रतूर्येषु" १, १०६, २। ६, २४, ५। ८, ३७, १।

† ऋ० सं० १, ५, ४, ३. द्रष्टव्यः।

‡ निरु० ६, २२।

§ "शूरः" निरु० ४, १२।

(३६) वाजसातौ*। वाजोऽन्नं दीयते येन। "वृधे च नो भवतं वाजसातौ (ऋ० सं० १, ३, ५, ६)"—इति निगमः॥

(३७) समनीके। 'अन प्राणने (अदा० प०)'। 'अनिहृषिभ्यां किच्च (उ० ४, १७)'—इति ईकन् प्रत्ययः। अनित्यनीकम्। यद्वा; नञ्-पूर्वान्नयतेः 'पिपीलिकादयश्च (उ० ४, २५)'—इति निपात्यते। न नीयते न चाल्यते अनीकम् सेनाविशेषः। सङ्गतान्यनीकानि यस्मिन्। "भोजः शत्रून्त्समनीकेषु जेता (ऋ० सं० ८, ६, ४, ५)"—इति निगमः॥

(३८) खले†। 'खज मन्थे (भू० प०)'। 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)'। व्यत्ययेन जकारस्य लकारः। मन्थ्यते हि योद्धारस्तत्र। 'स्खल सञ्चलने (भू० प०)'—इत्यस्माद्वा घः। व्यत्ययेन सकारलोपः। स्खलन्ति तत्र कातराः। "खले न पर्षान् प्रति हन्मि भूरि (ऋ० सं० ८, १, ६, २)"—इति निगमः॥

(३९) खजे। 'खज मन्थे (भू० प०)'। पूर्ववत् साध्योऽर्थश्च। "कर्मन् कर्मञ्छतमूतिः खजङ्करः (ऋ० सं० १, ७, १५, १)"—इति निगमः॥

(४०) पौंस्ये। बलनामसु व्याख्यातम् (२२० पृ०)। अभिवर्द्धते ऽनेन ***। निगमोऽन्वेषणीयः॥

(४१) महाधने। 'मह पूजायाम् (भू० प०)'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ० २, ७८)'—इति निपातनम्। धविः

* निरु० १२, ४५।
† निरु० ३, १०।

प्रीणनार्थः (भू०प०)। इदित्वान्नुम्। पचाद्यच्। वकारलोपः, इकारस्याकारस्य पृषोदरादित्वात्। धिनोतीति धनम् प्रीणयतीति सङ्ग्रामो यद्द्वारा। महच्चासौ धनञ्च महाधनम्। महद्धनमर्थोऽने-नेति वा। "इन्द्रं वयं महाधने (ऋ०सं०१,१,१३,५)"—"नास्य वर्त्ता न तरुता महाधने (ऋ०सं०१,३,२१,३)"—इति निगमौ॥

(४२) वाजे*। वाज-शब्दो व्याख्यातो बलनामसु (२१५पृ०)। "इन्द्र वाजेषु नो अव (ऋ०सं०१,१,१३,४)"—"तं त्वा वाजेषु वाजिनम् (ऋ०सं०१,१,८,३)"—इति निगमौ॥

(४३) अज्म†। 'अज गतिक्षेपणयोः (भू०प०)'। मनिन्। "अग्निर्नादीदेच्चित इद्धो अज्मन्ना (ऋ०सं०१,७,१६,२)"—इति निगमः। 'यज्ञगृहे युद्धे वा'—इति माधवः॥

(४४) सद्म‡। सदेर्मनिन्। अवसाद्यन्तेऽत्र प्राणिनः। निगमो-ऽन्वेषणीयः॥

(४५) संयत्। सम्पूर्वात् यमेर्यतेर्वा औणादिकः क्विप्। यमे-रनुनासिकलोपः तुगागमः। संयतन्ते संयच्छन्ति हयादीन्। "इळान्तः संयतं करत् (ऋ०सं०५,७,२,२)"। 'संयत् सङ्ग्रामः'—इति हर-दत्तः। "आसंयत मिन्द्रणः स्वस्तिम् (ऋ०सं०४,६,१४,५)"—इत्यत्र 'संयतं युद्धम्'—इति माधवः॥

---

* पु० २,७।
† पं० २, ४। निरु० ४, १२।
‡ पु० १, ११।

(४६) संवतः । सम्पूर्वाद् वनेः सम्पदादित्वात् क्विप्, अनुनासिकलोपे तुगागमः । संवननीयो हि शूरैः सङ्ग्रामः । "परस्या अधि संवतः (ऋ० सं० ६,५,२६,५)"—"स संवतो नवजातस्तुतुर्यात् (ऋ० सं० ४,१,७,३)"—इति निगमौ ॥

इति षट्चत्वारिंशत् सङ्ग्रामनामानि ॥ १७ ॥

**इन्वति(१) । नक्षति(२) । आक्षाणः(३) । आनट्(४) । आष्ट(५) । आपानः(६) । अशत्(७) । नशत्(८) । आनशे(९) । अश्नुतः(१०) । इति दश व्याप्तिकर्म्माणः* ॥ १८ ॥**

(१) इन्वति† । अत्र वधकर्मसु ऐश्वर्यकर्मसु च अनेकार्थत्वादिगतिकर्मादावुक्तमनुसन्धेयम् । 'इवि व्याप्तौ (भ्वा० प०)' । "सध्रीनां योगमिन्वति (ऋ० सं० १,१,३५,२)"—इति निगमः ॥

(२) नक्षति‡ । 'नक्ष णक्ष गतौ (भ्वा० प०)' । "नक्षद्दाभंततुरिं पर्वतेष्ठाम् (ऋ० सं० ४,६,१३,२)"—"वृद्धस्य चिद्वर्द्धतो द्यामिनक्षत§ (ऋ० सं० १,४,१०,४)"—इति निगमौ । 'इन्वति नक्षतीति व्याप्तिकर्मसु पठितस्य इकार आगमश्छान्दसः'—इति स्कन्दस्वामिभाष्यम् ॥

---

(२) "ननक्षे" ग. C. D. F. ।

(५) "आष्ठ" ग. "आष्टः" C. F । "आष्ठः" D ।

* "इति व्याप्तिकर्माणः" ग ।

† पु० २, १४ ।

‡ पु० २, १४ ।

§ अवग्रहकारस्तु 'इमक्षतः'—इत्येकपदमाह ।

(३) आचाणः* । अश्नोतेर्लेटि शानच् । 'सिब्बहुलं लेटि (३, १, ३४)'—इति बाहुलकात् सिप्, उपधादीर्घश्च, व्रश्चादिषत्वे 'षढोः कः सि (८, २, ४१)', 'आदेशप्रत्यययोः (८, ३, ५९)', णत्वम् "आचाणे शूर वज्रिवः (ऋ०सं० ७, ७, ८, १)"—इति निगमः । भाष्यं द्रष्टव्यम् ॥

(४) आनट्† । 'णश अदर्शने (दि०प०)' । लुङि च्लेः 'मन्त्रे घसह्वरणश (२, ४, ८०)'—इति लुक् । संयोगान्तलोपे (८, २, २३), व्रश्चादिषत्वे (८, २, ३६), जश्त्वम् । 'छन्दस्यपि दृश्यते (६, ४, ७३)'—इति आडागमः । "किमिच्छन्ती सरमा प्रेदमानट् (ऋ०सं० ८, ६, ५, १)"—"घर्मस्वेदेभिर्द्रविणं व्यानट् (ऋ०सं० ८, २, १६, १)"—इति निगमौ ॥ यद्वा; अश्नोतेर्लिटि एशत्वे व्यत्ययेन एशोलुक्, व्रश्चादिना षत्वम्, 'झलां जशोऽन्ते (८, २, ३९)', 'वावसाने (६, ४, ५६)' । "उपांशुना सममम्रतत्वमानट् (ऋ० सं० ३, ८, १०, १)"—इति निगमाः ॥

(५) आष्ट । अश्नोतेर्लुङि आत्मनेपदप्रथमपुरुषैकवचनम् । "आष्ट मविदार्थगाधम् ( ? )"—इति निगमः ॥

(६) आपानः‡ । 'आप्लृ व्याप्तौ (स्वा०प०)' । शानच् । अन्तते र्बधकर्मण 'तद्रूपम्'—इति स्कन्दस्वामी । "आपानासो विवस्वतः (ऋ०सं० ६, ७, ३४, ५)"—इति निगमः । भाष्यं द्रष्टव्यम् (निरु० ३, १०) ॥

---

* निरु० २, १० ।

† निरु० २, १८; ४, १२; ६, ८; ११, ३६; २५; १२, १८ ।

‡ निरु० २, १० ।

(७) अशत् । अश्नोते र्व्यत्ययेन लङि च्लेः पूर्ववत् लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि (६,४,७५)'—इत्यड़भावः । निगमोऽन्वेषणीयः ॥

(८) नशत् । नशयतेर्लेटि 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)'। "स धीतये ते नशत् ( ? )" —"न किः शवांसि ते नशत् (ऋ० सं० ६,५,२,३)"—इति निगमौ ॥

(९) आनशे । अश्नोतेर्लिटि रूपम् । "न कि ष्टश्व आनशे (ऋ० सं० १,६,६,१)"—इति निगमः ॥

(१०) अश्नुते । "अतंप्तनूर्नतदामो अश्नुते (ऋ० सं० ७,३, ८,१)"—"व्यश्नुहि तर्पया काममेषाम् (ऋ० सं० १,४,१८,४)" —इति निगमौ ॥

इति दश व्याप्तिकर्माणः ॥ १८ ॥

**दभ्नोति[१] । श्नथति[२] । ध्वरति[३] । धूर्वति[४] । हृणक्ति[५] । हृश्चति[६] । क्रुणवति[७] । क्नन्तति[८] । श्वसिति[९] । नभते[१०] । अर्दयति[११] । स्तृणाति[१२] । स्नेहयति[१३] ।**

(१) इतोतन्तरम् "स्नथति"—इत्यधिकम् ग ।
(२) "श्रथति" C. D. F ।
(७) "क्षणत्ति" ग । "ऋणत्ति" iid ।
(९) "श्वसति" ग. iid ।
(१०) "नभति" ग. iid ।
(११) "अर्दति" ग. iid. इतोऽनन्तरम् "मर्दति" इत्यधिकञ्च ।
१२) नास्त्येतत् ग. iid ।
(१३) "स्नेहति" ग. iid ।

यातयति(१४) । स्फुरति(१५) । स्फुलति(१६) । नि वपन्तु(१७) । अव तिरति(१८) । वियातः(१९) । आ तिरत्(२०) । तळित्(२१) । आखण्डल(२२) । द्रूणाति(२३) । रम्णाति(२४) । शृणाति(२५) । श्नाति(२६) । तृणेढि(२७) । ताढि(२८) । नि तोशते(२९) । नि बर्हयति(३०) । मिनाति(३१) । मिनोति(३२) । धमति(३३) । इति त्रयस्त्रिंशत् बधकर्म्माणः* ॥ १९ ॥

व्याप्तिकर्मसु शाकपूणेरतिरिक्ता एव "विव्याकः"-"उरुव्यचाः"-"विव्रे"—इति स्कन्दस्वामी ॥

(१) दभ्नोति† । 'दम्भु दम्भे' स्वादिः (प०) । "न त्वा केता आ दभ्नुवन्ति भूर्णयः (ऋ० सं० १,४,२०,२)"—इति निगमः ॥

(२) श्नथति‡ । श्नथ क्नथ क्रथ हिंसायाम् (भ्‌० प०)' । श्नथद् वृत्र मुत सनोति वाजम् (४,८,२७,१)"—"नव पुरो नवतिं च श्नथिष्टम् (ऋ० सं० ५,६,२३,५)"—इति निगमौ ॥

(३) धूर्वति§ । 'तुर्व धुर्व दुर्व थुर्व हिंसार्थाः (भ्‌० प०)' । 'उप-

---

(१४) "याचति" ग iid । "यावति" C ।
(२४), (२५) इमे न स्त एव ग. C. D. F ।
(२६) इतोऽनन्तरमिहैव "मिनाति (३१)"—इति ग. C. D. F ।
(२९) "नितोश्यति" ग. C. D. F । "नितोषते" च ।
(३०) "बर्हयति" F ।
(३२) "जूर्वति"—इत्यधिकम् ग. C. D. F ।
* "इतिबधकर्माणः" ग. ।
† निरु० ५, १२ ।
‡ निरु० ३, २१; ११, ४० ।
§ निरु० ३, ९ ।

धायाश्च (८,२,७८)'—इति दीर्घः। "धूरसि धूर्व धूर्वन्तं धूर्व (य०वा०सं० १,८)"—इति निगमः॥

(५) वृणक्ति। 'वृजी वर्जने' रुधादिः। "नि चक्रेण रथ्या दुष्पदा वृणक् (ऋ०सं० १,४,१६,४)"—इति निगमः॥

(६) वृश्चति*। 'व्रश्च छेदने' तुदादिः। 'ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम्। 'वृश्चा मध्यं प्रत्यग्रं शृणीहि (ऋ० सं० ३,२,४,२)"—"वि वृश्च वज्रेण वृत्रमिन्द्रः (ऋ०सं० १,४, २८,५)"—इति निगमौ॥

(७) क्षणति†। 'क्षवि हिंसाकरणयोः (भ्वा०प०)'। 'व्यत्ययेन 'धिन्विकृण्व्योरच (३,१,८०)'—इत्येतन्न भवति॥

(८) कृन्तति‡। 'कृती छेदने (प०)' तुदादिः। 'शेमुचादीनाम् (७,१,५९)'। "वि दस्यूँर्योनावकृतो वृथाषाट् (ऋ०सं० १,५, ४,४)"—इति निगमः॥

(१०) नभते§। 'णभ तुभ हिंसायाम्' (भ्वा०) आत्मनेपदी। "नभन्ता मन्यके समे (ऋ०सं० ६,३,२२,१)"—इति निगमः॥

(११) अर्दयति। 'अर्द हिंसायाम् (भ्वा०प०)' आधृषीयः। "वृत्रं विपर्वमर्दयत् (ऋ०सं० २,५,६,१)"—इति निगमः॥

(१२) स्तृणाति। 'स्तृञ् आच्छादने' क्र्यादिः रुधादिश्च। "कदु वृत्रघ्नो अस्तृतम् (ऋ०सं० ६,४,४९,५)"—इति निगमः॥

---

* प० ३, २०।
† निरु० ६, ३२।
‡ निरु० ९, २२।
§ निरु० १०, ५।

(१३) स्नेहयति। 'ष्णिह स्नेहने' चुरादिः। "यः स्नोहितीषु पूर्व्यः (ऋ० सं० १,५,२१,२)"—इति निगमः। स्नेहयतिर्वधकर्मा' —इति स्कन्दस्वामी॥

(१४) यातयति*। 'यति निकारोपस्कारयोः' चुरादिः। अर्यातयन्त क्षितयो नवग्वाः (ऋ० सं० १,३,२,१)"—इति निगमः॥

(१५) स्फुरति†। (१६) स्फुलति। 'स्फुर स्फुरणे', 'स्फुल सञ्चलने' तुदादिः, कुटादिः। "पदा क्षुम्पमिव स्फुरत् (ऋ० सं० १,६,६,३)"—"आर्त्नी इमे विस्फुरन्तौ अमित्रान् (ऋ० सं० ५,१,१९,४)"—इति निगमः। 'स्फुरतीति वधकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(१७) नि वपन्तु। 'डुवप बीजसन्ताने (भू० उ०)'—इत्यस्मात् लोट्। "अन्यन्ते अस्मन्निवपन्तु सेनाः (ऋ० सं० २,७,१८,१)" —इति निगमः॥

(१८) अव तिरति‡। तरतेर्लट् 'बहुलं छन्दसि (७,४,७८)' —इतीत्वम् "अवातिरज्ज्योतिषाग्निस्तमांसि (ऋ० सं० ४,५,११,१)"—"यदिन्द्र शारदी रवातिरः (ऋ० सं० २,१,२०,४)"—इति निगमौ॥

(१९) वियातः§। 'तत्र वियात इत्येतद् वियातयनइति विया-

---

* निरु० १०, २२।

† निरु० ५; १७; ९, ४०।

‡ निरु० २, २१; ४, ७; १०, २५; ४०; ११, ९; ११, २०; २९; १२, २९।

§ निरु० २, १०।

तयेति वा (निरु० ३,१०)'—इति भाष्ये स्कन्दस्वामी तस्य समाधिमर्थं व्याचष्टे—'वि पूर्वस्य यातयतेर्वा घे प्रत्यये वियातय इति भवति धारयः पारयः इतिवत्। तस्य सम्बोधनम् वियातयेति। त्रियातयितरिति वा पाठान्तरम्'—इति। धारय-पारयेति दृष्टान्त-प्रदर्शनेन 'व्यत्ययोबहुलम् (३,१,८५)'—इति अस्मादपि 'अनुपसर्गा-ल्लिम्पविन्द (३,१,१३८)'—इति सूत्रेण श-प्रत्यय इति दर्शयति॥

(२०) आ तिरत्*। आङ् पूर्वात्तरते र्लङ् पूर्ववत् इलम्।
"इन्द्रः पूर्भिरातिरत् दासमर्कैः ( ? )"—इति निगमः॥

(२१) तलित्†। अन्तिकनामसु व्याख्यातम् (२६४पृ०)॥

(२२) आखण्डलः‡। 'खड खडि कडि भेदे (प०)' चुरादिः। अस्मादाङ्पूर्वात् 'मङ्गेरलच् (उ० ५,७२)'—इति बाहुलकादलच्। "आखण्डल प्र हूयसे (ऋ० सं० ६,१,२४,२)"—इति निगमः॥

(२३) द्रूणाति। 'द्रू हिंसायाम्' क्र्यादिः। "त्वष्टी मनु प्रसितिं द्रूणानः (ऋ० सं० ३,४,२३,१)"—इति निगमः॥

(२४) रम्णाति§। 'रमु क्रियायाम्' भ्वादिरात्मनेपदी; व्यत्ययेन श्ना, परस्मैपदम्॥

(२५) शृणाति। 'शॄ हिंसायाम्' क्र्यादिः प्वादिश्च। "शृणाति वीळुरुजति स्थिराणि (ऋ० सं० ८,४,१५,१)"—इति निगमः॥

(२६) शम्नाति‖। 'शम उपशमे' दिवादिः। व्यत्ययेन श्ना।

---

* इहैव पुरस्तात् (१८)।
† पृ० १६।
‡ निरु० ३, १०।
§ निरु० ९, १८; १५; १०, ९; ११।
‖ "शशमानः" प० २, १४; ४, २। निरु० ६, ८।

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Chaitanya-chandrodaya, Náṭaka, 3 fasci. | 1 | 14 |
| Srauta Śútra, A'svaláyana, 11 fasci. | 6 | 14 |
| ——— Láṭyáyana, 9 fasci. | 5 | 10 |
| S'ankara Vijaya, 3 fasci. | 1 | 14 |
| Daśa-rúpa, 3 fasci. | 1 | 14 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | 1 | 4 |
| Śánkhya-sára, 1 fasci. | 0 | 10 |
| Lalita-vistara, 6 fasci. | 3 | 12 |
| " " Translation, 1 fasci. | 1 | 0 |
| Taittiríya Bráhmaṇa, 24 fasci. | 15 | 0 |
| Taittiríya Sañhitá, 31 fasci. | 19 | 6 |
| Taittiríya A'raṇyaka, 11 fasci. | 6 | 14 |
| Maitri Upanishad, 3 fasci. | 1 | 14 |
| A's'valáyana Grihya Sútra, 4 fasci. | 2 | 3 |
| Mimáñsá Darsana, 15 fasci. | 9 | 6 |
| Táṇḍya Bráhmaṇa, 19 fasci. | 11 | 14 |
| Gopatha Bráhmaṇa, 2 fasci. | 1 | 10 |
| A'tharvana Upanishads, 5 fasci. | 3 | 2 |
| Agni Puráṇa, 14 fasci. | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. | 23 | 12 |
| Gopála Tápaní, 1 fasci. | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. | 1 | 14 |
| Chaturvarga Chintámaṇi, 36 fasci. | 22 | 8 |
| Gobhilíya Grihya Sútra, 12 fasci. | 7 | 8 |
| Piñgala Chhandah Sútra, 3 fasci. | 1 | 14 |
| Taittiríya Prátis'ákhiya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. | 2 | 8 |
| " " Translation, Part II, 1 fasci. | 1 | 0 |
| Rájatarangini, | 4 | 0 |
| Mahábhárata, vols. III. and IV., | 40 | 0 |
| Puráṇa Sangraha, | 1 | 0 |
| Páli Grammar, 2 fasci. | 1 | 4 |
| Aitareya A'raṇyaka of the Rig Veda, 5 fasci. | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. | 2 | 8 |
| Brahma Sútra, English, | 1 | 0 |
| Kátantra, 6 fasci. | 6 | 0 |
| Kámandakíya Nítisára, 4 fasci. (Fasci. 1, out of stock.) | 2 | 8 |
| Bhámatí, 8 fasci. | 5 | 0 |
| Aphorisms of Sáṇḍalya, English, Fasci. 1., | 0 | 10 |
| Vayu Purána, 6 fasci. | 3 | 12 |
| Kathá Sarit Ságara, English Translation, 7 Fasci. | 7 | 0 |

Prakrit Lakshanam, fasci. 1., ........ Rs. 1 8
Nirukta, 2 fasci ........ 1 4
Vishnusmriti, fasci. 1., ........ 0 10

## *Arabic & Persian Series.*

Dictionary of Arabic Technical Terms, 20 fasci., complete, ........ Rs. 25 0
Risálah-i-Shamsiyah, (Appendix to Do. Do.), ........ 1 4
Fihrist Túsí, 4 fasci. ........ 3 0
Nukhbat-ul-Fikr, ........ 0 10
Futúh-ul-Shám, Wáqidí, 9 fasci. ........ 5 10
Futúh-ul-Shám, Azadí, 4 fasci. ........ 2 8
Maghází of Wáqidí, 5 fasci. ........ 3 2
Isábah, 28 fasci., with supplement, ........ 20 14
Táríkh-i-Fírúz Sháhí, 7 fasci. ........ 4 6
Táríkh-i-Baihaqí, complete in 9 fasci. ........ 5 10
Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. ........ 9 6
Wís o Rámín, 5 fasci. ........ 2 3
Iqbálnámah-i-Jahángírí, complete in 3 fasci. ........ 1 14
'Alamgírnámah, 13 fasci., with index, ........ 8 2
Pádsháhnámah, 19 fasci., with index, ........ 11 14
Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, ........ 12 12
Áín-i-Akbarí, Persian text, 4to., 22 fasci. ........ 27 8
Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, ........ 12 4
Farhang-i-Rashídí, 14 fasci., complete, ........ 17 8
Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, ........ 2 0
Akbarnámah, 17 fasci. with Index, ........ 20 0
Maásir-i-'Alamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, ........ 3 12
Haft Ásmán, history of the Persian Masnawi, ........ 1 4
Tabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. ........ 10 0
Tabaqát-i-Náçirí, Persian text, 5 fasci. ........ 3 2
History of the Caliphs (English Translation), 6 fasci. ........ 6 0

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XX, 1843-51, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXIV, XXVI, XXVII, 1855, 1857-58, and vols. XXX, XXXIII to XLIX, 1861, 1864-80, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

Asiatic Researches, vols. VI. to XI. and vols. XIII. XVII. XIX. and XX. each, ........ Rs. 10 0
Do. Do. Index, ........ 5 0
Catalogue of Fossil Vertebrata, ........ 2 0
——— of Arabic and Persian Manuscripts, ........ 1 0
Tibetan Dictionary, ........ 10 0
——— Grammar, ........ 8 0
Notices of Sanskrit Manuscripts, 14 fasci. ........ 14 0
Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. ........ 1 0
Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. ........ 2 0
Aborigines of India, by B. H. Hodgson, ........ 3 0
Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, 2 0
Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, ........ 1 8
'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., ........ 16 0
Analysis of the Sher Chín, by Alexander Csoma de Körös, ........ 1 0
Khazánat-ul-'ilm, ........ 4 0
Sharáyat-ul-Islám, ........ 4 0
Anís-ul-Musharrihín, ........ 3 0
Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar, ........ 2 0
Moore and Hewitson's Descriptions of New Indian Lepidoptera, Part I, with 3 Coloured Plates, ........ 6 0

BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 471.

# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ.

FASCICULUS IV.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1881.

"शिशिरं जीवनायकम् (निरु० १,१०)"—इति निगमः। 'शिशिरं शृणातेः शम्नातेर्वा'—इति निरुक्तम् (१,१०)। 'शम्नातेः हिंसार्थस्य'—इति स्कन्दस्वामी ॥

(२७) तृणेढि। 'तृहि हिंसायाम्' रुधादिः। लटि तिपि * * * एकारभावः। निगमोऽन्वेषणीयः ॥

(२८) ताळ्हि। 'तड आघाते' चुरादिः। लण्-मध्यमः। पृषोदरादित्वात् रूपसिद्धिः। "वि शत्रून्ताळ्हि वि मृधोनुदस्व (ऋ० सं० ८,८,३८,२)"—इति निगमः ॥

(२९) नितोशते। तोशते नैरुक्तो धातुः। "मन्दी मदाय तोशते (ऋ० सं० ७,५,१३,४)"—"इन्दुरिन्द्राय तोशते नितोशते (ऋ० सं० ७,५,२१,११)"—"सुनासीरा हविषा तोशमानाः (?)"—इति निगमाः ॥

(३०) निबर्हयति। 'बर्हि हिंसायाम्' चुरादिः, निपूर्वः। "बर्हयते नि सहस्राणि बर्हयः (ऋ० सं० १,४,१६,१)"—इति निगमः ॥

(३१) मिनाति, (३२) मिनोति, (३३) धमति*। गतिकर्मसु व्याख्याताः (२४६ पृ०)। "न ता मिनन्ति मायिनो न धीराः (ऋ० सं० ३,४,१,१)"—"न मिनन्ति वेधसः (?)"—"उशिग्भ्यो नामिमीत वर्णम् (ऋ० सं० २,५,२४,५)"—इति मिनाते र्निगमाः। अत्र, 'मिनातिर्बधकर्मा'—इति स्कन्दस्वामी। "धाता वर्ण

* पृ० १४।

चरत आमिनाने (ऋ० सं० १, ८, १, २)"—"उत द्विबर्हा अमिनः सहोभिः (ऋ० सं० ४, ६, ७, १)"—इति मिनोतेर्निगमौ। अनयोः, 'मिनोतिर्वधकर्मा'—इति स एव। "वि मृध्नश्चिरधमृत्तमांसि (ऋ० सं० ३, ७, २६, ४)"—इति निगमः॥

इति त्रयस्त्रिंशत् वधकर्माणः॥ १९॥

**दिद्युत्(१)। नेमिः(२)। हेतिः(३)। नमः(४)। पविः(५)। सृकः(६)। वृकः(७)। वधः(८)। वज्रः(९)। अर्कः(१०)। कुत्सः(११)। कुलिशः(१२)। तुजः(१३)। तिग्मम्(१४)। मेनिः(१५)। स्वधितिः(१६)। सायकः(१७)। परशुः(१८)। इत्यष्टादश वज्रनामानि*॥ २०॥**

(१) दिद्युत्†। 'द्युत दीप्तौ (भ्वा० आ०)'। 'द्युतिगमिजुहोतीनां द्वे च (३, २, १७८ वा० २)'—इति क्विपि द्वित्वे, 'द्युतिस्वाप्योः सम्प्रसारणम् (७, ४, ६७)'—इत्यभ्यासस्य सम्प्रसारणम्। द्योतते उज्ज्वलत्वात्। द्यतेर्वा क्विपि पृषोदरादित्वात् रूपसिद्धिः। द्यति शत्रून्। "अस्तुर्न दिद्युत्त्वेष प्रतीका (ऋ० सं० १, ५, १०, ४)"

---

(५) इतोऽनन्तरमिहैव "वज्रः (९)"—इति. ग।
(७) नास्त्येतत् ङ पुस्तके।
(१०) "अत्कः" ग. C. D. F।
(११) इतोऽनन्तरमिहैव "मेनिः (१५)"—इति ग।
(१३) "तुञ्जः" कातिरिक्तेषु सर्वत्रैव।
(१४) "तिग्मः"—इति ङ।
* "इति वज्रस्य" ग।
† निरु० १०, ७।

—"यत्रा वो दि॒द्युद्रद॑ति (ऋ०सं० ९,४,९,१)"—"या ते॑ दि॒द्युद॑वसृष्ट (ऋ०सं० ५,४,१३,३)"—इति निगमाः ॥

(२) नेमिः । नयतेः 'नियोमिः (उ० ४,४३)'—इति मि-प्रत्ययः । नयति शत्रून् विनाशं, नीयन्तेऽनेन वा ऐश्वर्यात् । यद्वा; 'णमु प्रह्वत्वे (भू०प०)'। उत्सर्गाच्छन्दसि गमादिभ्यो दर्शनात् (३,२,१७१भा०)'—इति कि-प्रत्ययः । लिड्वद्भावाद् द्विर्वचने 'अत एकहल्मध्येऽनादेशादेर्लिटि (६,४,१२०)' अन्तर्णीतण्यर्थो नमिः । नमयति शत्रून् । "अरि॑ष्टनेमिं पृत॒नाजं॑ मा॒शुम् (ऋ० सं० ८,८,३६,१)"—इति निगमः ॥

(३) हेतिः* । हन्तेर्हिनोतेर्वा 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च (३,३,९७)'—इति क्तिनि हन्तेर्नकारस्यैत्वम्, हिनोतेर्गुणश्च निपात्यते । हन्यन्तेऽनेन शत्रवः, गम्यतेऽनेन जयः, वर्द्धते वैश्वर्यम् । "ब्र॒ह्म॒द्विषे॒ तपु॑षिं हे॒ति म॑स्य (ऋ०सं० ३,२,४,२)"—इति निगमः ॥

(४) नमः† । नमतेरसुन् । नेमिवदर्थः । निगमोऽन्वेषणीयः ॥

(५) पविः‡ । पवतिर्गतिकर्मा । 'अचइः (उ० ४,१३४)'। गन्ता शत्रून्, गम्यतेऽनेन यश इति च । "सृकं सं॒शाय॑ प॒विमि॑न्द्र ति॒ग्मम् (ऋ०सं० ८,८,३८,२)'—इति निगमः । सृकतिग्मशब्दावत्र क्रियाशब्दौ ॥

---

* निरु० ६, २; ९, १५ ।
† निरु० ४, १५ ।
‡ पु० १, ११ ।

(६) स्रुकः। 'स्रु गतौ (भ्वा० प०)'। स्रुवृभूशुषिमुषिभ्यः कक् (उ० ३,२९)—इति क-प्रत्ययः। दर्शितनिगमः (ऋ० सं० ८,८, ३८,२)॥

(७) वृकः*। 'वृक आदाने (भ्वा० आ०)' इगुपधलक्षणः कः (३,१,१२५)। आदत्ते शत्रुप्राणान्। वृणक्तेर्वा के पृषोदरादित्वात् (६,३,१०९) रूपसिद्धिः। हेतिवदर्थः। निगमोऽन्वेषणीयः॥

(८) वधः†। 'जनिवध्योश्च (७,३,३५)'—इति वृद्धि-प्रतिषेधः। हेतिवदर्थः। "वृत्रस्य यद् भृष्टिमता वधेन (ऋ० सं० १,४,१४, ५)"—"इन्द्रो अस्या अववधर्जभार (ऋ० सं० १,२,३७,४)"—इति निगमौ॥

(९) वज्रः‡। 'व्रज गतौ (भ्वा० प०)'। 'ऋज्रेन्द्र (उ०,२,२७)'—इत्यादिना रन्-प्रत्ययान्तो निपात्यते। यद्वा; वृणक्तेर्हेतुमत्यन्तात् रक्, गुणे, प्राप्तस्य रेफस्य लोपः। वर्जयति प्राणैः शत्रून्। अन्ये वर्जयतिमेव विनाशार्थमाहुः विनाशयति शत्रून्। "त्वष्टास्मै वज्रं स्वर्यन्ततक्षः (ऋ० सं० १,२,३६,२)"—इति निगमः॥

(१०) अर्कः§। 'अर्च पूजायाम् (भ्वा० प०)'। 'कृदाधारार्चिकलिभ्यः कः (उ० ३,३८)'—इति क-प्रत्ययः। 'चोः कुः (८,२,३०) "इन्द्रः पूर्भिदातिरद्दासमर्कैः (ऋ० सं० ३,२,१५,१)" — इति निगमः॥

---

* प० २, २४. ४, २। नि० ५, १०. ६, २६; १२, ४४।

† पृ० ९।

‡ निरु० २, ११।

§ पृ० ७।

(११) कुत्सः* । कृन्ततेः । 'स्तुवृश्चिकृत्यृषिभ्यः कित् (उ० ३, ६३)'–इति स-प्रत्ययः । कृन्ततेरकारस्य बाहुलकादुत्वम् । कृन्तति शत्रून् । यद्वा; 'कुत्स क्षेपणे' चुरादिरात्मनेपदी । घञ् । कुत्सयत्यनेन शत्रून् । "स॒द्यो दस्यू॒न् प्र मृ॑ण कुत्स्येन (ऋ० सं० ३, ५, १८, २)"—इति निगमः । यकार उपजनः ॥

(१२) कुलिशः† । 'कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोति'—इति स्कन्दस्वामी । क्षीरस्वामी—कुलशब्द उपपदे श्यतेः 'आतोऽनुपसर्गे कः (३, २, ३)', पृषोदरादित्वात् अकारस्येकारः । यद्वा; कुलशब्दोपपदादन्तर्णीतण्यर्थात् 'शद्लृ शातने (भ्वा० तु० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'–इति डः, पूर्ववदिकारः । मेघस्यान्तं पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कुलानीव, तेषां शातनात् । "स्कन्धां॑सीव॒ कुलि॑शेना॒ विवृ॑क्णाहिः (ऋ० सं० १, २, ३६, ५)"—इति निगमः ॥

(१३) तुजः । तुजेः पचाद्यच् । हेतिवदर्थः । निगमोऽन्वेषणीयः‡ ॥

(१४) तिग्मम्§ । 'तिज निशाने' चुरादिः । 'युजिरुचितिजां कुश्च (उ० १, १४३)'—इति मक्प्रत्ययः कुत्वञ्च । तिज्यते तीक्ष्णीक्रियते । 'तिग्मं तेजतेरुत्साहकर्मणः तीक्ष्णमित्यायुधं योद्धारमुत्साह-

---

* निरु० २, ११ ।

† प० ४, २ । निरु० ६, १७ ।

‡ तुजमे ऋ० सं० ४, ६, २, ७ ।

§ निरु० १०, ६ ।

यति तिग्मशातनः'—इति माधवः । "वि तिग्मेन वृषभेणा पुरोऽभेत् (ऋ० सं० १, ३, ३, ३)"—इति निगमः ॥

(१५) मेनिः* । मन्यतेः कान्तिकर्म्मणः 'उत्सर्गतश्छन्दसि गमादिभ्यो दर्शनात् (३, २, १७१ भा०)'—इति कि-प्रत्ययः । नेमिवत् प्रक्रिया । काम्यते हि आयुधम् । यद्वा ; 'मिञ् हिंसायाम् (क्र्या० उ०), 'वीज्याज्वरिभ्यः (उ० ४, ४८)'—इति बाहुलकात् नि-प्रत्ययः । हेतिवदर्थः । निगमोऽन्वेषणीयः† ॥

(१६) स्वधितिः‡ । स्व-शब्दोपपदात् 'धि धारणे (तु० प०)'—इत्यस्मात् क्तिन् । स्वं धनं धीयतेऽनेन । "न स्वधितिर्वनन्वति (ऋ० सं० ६, ७, १२, ४)"—इति निगमः ॥

(१७) सायकः । 'षोऽन्तकर्मणि (दि० प०)' । ण्वुल् वृद्धौ 'आतो युक् चिण्कृतोः (७, ३, ३३)' । शत्रूणामन्तकरः । 'षिञ् बन्धने (क्र्या० उ०)'—इत्यस्माद्वा ण्वुल् । बध्नाति स्थिरीकरोति तद्वत् ऐश्वर्यादि । "पुरीषिणं सायकेना हिरण्ययम् (ऋ० सं० ८, १, ५, ५)"—"न सायकस्य चिकिते जनासः (ऋ० सं० ३, ३, २३, ३)"—इति निगमौ ॥

(१८) परशुः । 'शॄ हिंसायाम् (क्र्या० प०)' । 'आङ्परयोः खनिशॄभ्यां डिच्च (उ० १, ३२)'—इति कु-प्रत्ययः । डित्त्वाट्टिलोपः । 'परान् शृणातीति परशुः'—इति दण्डनाथवृत्तिः । 'परान् श्यतीति

---

* पृ० १, ११ ।

† निरु० १, १५ ।

‡ ऋ० सं० १०, २, ११, ११. द्रष्टव्यः ।

परशुः'—इति क्षीरस्वामी । तत्र मृगय्वादित्वात् (उ० १, ३६) कुः । "शिशीते ननं परशु स्वायसम् (ऋ० सं० ८, १, १४, ३)"— "अभीदु शक्रः परशुर्यथावनम् (ऋ० सं० ५, ७, ९, १, ४)"—इति निगमौ ॥

इत्यष्टादश वज्रनामानि ॥ २० ॥

## इरज्यति[१] । पत्यते[२] । क्षयति[३] । राजतीति चत्वारऐश्वर्य्यकर्म्माणः* ॥ २१ ॥

(१) इरज्यति† । कण्ड्वादिः । "यएकश्चर्षणीनां वसूना मिरज्यति (ऋ० सं० १, १, १४, ४)"—"महो नृम्णस्य धर्मणामिरज्यसि (ऋ० सं० १, ४, १९, ३)"—इति निगमौ ॥

(२) पत्यते । नैरुक्तधातुः । दिवादौ 'तप ऐश्वर्य्ये वा' इत्यस्य स्थाने 'पत ऐश्वर्य्ये' इति केचित् पठन्ति । * * * । "उग्रं शवः पत्यते धृष्णवोजः (ऋ० सं० ३, २, १९, ४)"—"द्युतद्यामानियुतः पत्यमानः (ऋ० सं० ४, ८, ५, ४)"—इति निगमौ ॥

(३) क्षयति‡ । "सेदु राजा क्षयति चर्षणीनाम् (ऋ० सं० १, २, ३८, ५)"—इति निगमः ॥

(४) राजति§ । 'राजृ दीप्तौ (भ्वा० उ०)' स्वरितेत् । "धियोवि-

---

(३) "क्षियति" ग । पु० २, १४ ।

* 'इत्यैश्वर्यकर्माणः' ग ।

† प० ३, ५ ।

‡ निरु०—"क्षयन्तम्" ५, ९. "क्षयः" ८, १८ ।

§ निरु० १०, ४६ ।

एतत्? निपातनात्; वैयाकरणा 'नभ्राण्नपान्नवेदा (६,३,७५)' —इति निपातयन्ति'—इति स्कन्दस्वामी। तत्र द्विनञ्-पूर्वाद् विदेः कर्त्तर्यसुनि एकस्य नञोलोपोऽन्यस्य प्रकृतिभावश्च निपात्यत इति भावः। "त्रिश्चिन्नो अद्या भवतं नवेदसा (ऋ०सं०१,३, ४,१)"—इति निगमः॥

(१०) कविः*। 'कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२,१३)'—इति भाष्ये 'क्रामतेः कवतेर्वा गतिकर्मण इति रूपम्' —इति स्कन्दस्वामी। क्रामतेः कवतेश्च 'इन् सर्वधातुभ्यः (उ०४, ११४)'—इतीन् प्रत्ययः क्रामतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात्। क्रान्त मस्यास्तीति मत्वर्थीयस्य लुक्। कविः क्रान्तदर्शनः। 'अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः'—इत्युवटः। "कवी नो मित्रावरुणा (ऋ०सं०१,१,४,२)"—इति निगमः॥

(११) मनीषिणः†। 'मनु अवबोधने (दि०आ०)'। 'कॄतॄभ्यामीषन् (उ०४,२६)'—इति बाहुलकादीषन्। मनीषा प्रज्ञाऽस्यास्ति व्रीह्यादित्वात् इनिः। यद्वा; मनस ईषा स्तुतिः प्रज्ञा वा मनीषा। पृषोदरादित्वाद्रूपसिद्धिः। पूर्ववदीषन्। "घृतपृष्ठं मनीषिणः (ऋ० सं०१,१,२४,५)"—इति निगमः।

(१२) मन्धाता। मन्यतेर्ल्युट्, दधातेस्तृच्। मानस्य ज्ञानस्य विधातयिता, पृषोदरादिः (६,३,१०९)। "मन्धातासि द्रविणोदा ऋता वा (ऋ०सं०७,५,३०,२)"—इति निगमः॥

---

* निरु० १२,१३।

† निरु० ९,२५. ८,१०।

(१३) विधाता* । विपूर्वात् दधातेस्तृच्। वेधः-शब्दवदर्थः। निगमोऽन्वेषणीयः ॥

(१४) विपः† । 'विप क्षेपे (चु० प०)' । इगुपधलक्षणः कः (३, १,१,३५)। विप्रवदर्थः। "अस्तृणाद् बर्हणा विपो (ऋ० सं० ६, ४,४३,१)"—इति निगमः ॥

(१५) मनश्चित्। मनः-शब्दोपपदात् 'चिती सञ्ज्ञाने (भ्वा० प०) इत्यस्मादौणादिकः क्विप्। मनसा चेतयते। निगमोऽन्वेषणीयः॥

(१६) विपश्चित्। विपो वाचश्चेतयते 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इत्यलुक्। 'विपश्यंश्चेतयते'—इति क्षीरस्वामी। पृषोदरादित्वात् पश्यतेरूपम्। "धर्मकृते विपश्चिते पनस्यवे (ऋ० सं० ६,७,१,१),,—"इन्द्रं पृच्छा विपश्चितम् (ऋ० सं० १,१,७,४)"—इति निगमौ ॥

(१७) विपन्यवः। विपनेः 'कत्युच् चिपेश्च (उ० ३,४८)'—इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कत्युच् प्रत्ययः। यद्वा; विविधं पननं स्तुतिः 'मृगय्वादयश्च (उ० १,३६)'—इति कु-प्रत्ययः। "विपन्यवो विप्रासो वाजसातये (ऋ० सं० ६,६,१०,६)"—इति निगमः ॥

(१८) आकेनिपः। आङ्-शब्दे, के-शब्दे, नि-शब्दे चोपपदे त्रिपूर्वात् पततेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। 'तत्पुरुषे कृति बहुलम् (६,३,१४)'। के आत्मनि पतन्ति अध्यात्म-

---

* प० ५,५। निरु० १०,२६. ११,११।

† पु० २.५।

ज्ञाने पतन्त इत्यर्थः। "असौ यथा केनिपानामिनो वृधे (ऋ०सं० ७,८,२६,४)"—इति निगमः॥

(१९) उशिजः*। 'वश कान्तौ (अदा०प०)'। 'वशेः किच्च (उ०२,६८)'—इति इजि-प्रत्ययः। ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम्। कामयते शास्त्राण्यभ्यसितुं व्याख्यातुं वा। "कक्षीवन्तं य औशिजः (ऋ०सं०१,१,३४,१)"—इति निगमः॥

(२०) कीस्तासः। कीर्त्तयतेः पचाद्यचि(३,१,१३४) घञि वा। कीर्त्तयन्ति प्रशस्तानर्थान्। "कीस्तासो अभिद्यवः (ऋ०सं०२,१,१३,२)"—इति निगमः॥

(२१) अद्धातयः। अद्धेति सत्यनाम। अततेरतयः। सत्यं प्राप्नोति; गत्यर्था बुद्ध्यर्थाः, सत्यं जानाति वा। "तदद्धातयद्विदुः (ऋ०सं०८,३,२३,१)"—इति निगमः॥

(२२) मतयः†। मन्यतेः क्तिन्। ज्ञायन्तेऽस्मादर्थाः। यद्वा, मतिरस्यास्ति मत्वर्थीयस्य लुक्। "अद्रोघवाचं मतिभिः शविष्ठम् (ऋ०सं०४,६,१२,२)"—"त्वामिन्द्र मतिभिः सुतम् ( ? )"—इति निगमौ॥

(२३) मतुथाः। 'गूथप्रोथपृष्ठादयः ( ? ‡ )'—इति मनेस्थकि नकारस्य तु-भावो निपात्यते। "तुथोऽसि विश्ववेदाः (य०वा०स०५,३१)"। 'विभजत्यो 'ब्रह्म वै तुथः (श०ब्रा०४,३,४,१५)'

---

* पु० २, ६।

† निघ० ४, १९।

‡ कौमुदीपाठस्तु—'तिथपृष्ठगूथयूथप्रोथाः (उ०२,११)'—इति।

-इति श्रुतिः—इत्युवटः। मतं ज्ञानं तुथो मनुष्यैः। तेन मनतुथाः सन्तः पृषोदरादित्वेन मतुथाः। निगमोऽन्वेषणीयः॥

(२४) वाघतः*। वहेः 'संश्चत्तृम्पद्वेहत् (उ० २,८९)'—इति प्रत्ययः, उपधावृद्धिः, हकारस्य घकारश्च निपात्यते। निवहति ग्रन्थार्थान्। "विद्वी शमी तरणित्वेन वाघतः (ऋ० सं० १,७,३०,४)"—इति निगमः॥

॥ इति चतुर्विंशतिर्मेधाविनइति मेधाविनामानि ॥१५॥

**रेभः(१)। जरिता(२)। कारुः(३)। नदः(४)। स्तामुः(५)। कीरिः(६)। गौः(७)। सूरिः(८)। नादः(९)। छन्दः(१०)। स्तुप्(११)। रुद्रः(१२)। कृपण्युरिति(१३) त्रयोदश स्तोतृनामानि† ॥ १६ ॥**

(१) रेभः। रेभतिरर्चतिकर्म्मा (३ ३ २ पृ०)। अर्च्। स्तौति। निगमोऽन्वेषणीयः‡॥

(२) जरिता। जरतेरर्चतिकर्मणः (३ ३ २ पृ०)। "त्वामर्का जरितारः (ऋ० सं० १,१,३,२)"—इति निगमः॥

(३) कारुः§। करोतेः 'कृवापाजि (उ० १,१)'—इत्युण्। कर्त्ता "विदुष्टे तस्य कारवः (ऋ० सं० १,१,२१,६)"—इति निगमः॥

---

* प० १८। निरु० ११, १६।

(५) "तामुः" ग. C. D. F।

(११) "स्तुत्" ग. C. D. F

† "इति स्तोतृणाम्" ग। इह च सन्ति पाठव्यतिक्रमाः।

‡ "सप्त रेभा अभि सन्नवन्ते (ऋ० सं० ८, २, २३, ३)"—इति द्रष्टव्यः।

§ निरु० २, १७. ६, ६. ८, १२।

(४) नदः*। नदति स्तुतिकर्मा (३ ३ ३पृ०)। अच्। "नदस्य मा रुधत काम आगन् (ऋ० सं० २,४,२२,४)"—इति निगमः॥

(५) स्तामुः। 'षम ष्टम अवैक्लव्ये (भ्वा०प०)'। 'छन्दसीणः (उ० १,२)'—इति बाहुलकादुण्। स्तोत्रकर्मणि "तामु"—इति केचित् पठन्ति। 'तमु काङ्क्षायाम् (दि०प०)'। पूर्ववद् बाहुलकादुण्। काङ्क्षति स्तोतुम्। उभयोरेव निगमोऽन्वेषणीयः॥

(६) कीरिः। 'कै गै रै शब्दे (भ्वा०प०)'। 'कायः कीः (?†)'—इति इ-प्रत्ययः। आकारलोपः। स्तोत्रलक्षणं शब्दमारचयति। 'इन् सर्वधातुभ्यः (उ० ४,११४)' "कीरेश्चिन्मन्त्रं मनसा वनोषि तम् (ऋ० सं० १,२,३४,३)"—इति निगमः॥

(७) गौः‡। व्याख्यातं पृथिवीनामसु (६पृ०)। गीयन्ते स्तूयन्तेऽनेन देवताः। "यो अश्वानां गवां गोपतिर्वशी (ऋ० सं० १,७,१२,४)"—इति निगमः। 'गोपतिः स्तोत्रपतिः'—इति स्कन्दस्वामी॥

(८) सूरिः§। 'सू प्रेरणे (तु०प०)'। 'सूङः क्रिः (उ० ४,६४)'—इति सुवतेः क्रिर्भवति। प्रकर्षेण ईरयति स्तोत्रम्। "सदा पश्यन्ति सूरयः (ऋ० सं० १,२,७,५)"—इति निगमः॥

(९) नादः। नदतेर्घञ्। भवत्यस्मात् स्तुतिः। निगमोऽन्वेषणीयः‖॥

---

* प० ४, २। नि० ५, २।

† 'कीरिः। कृत संशब्दने। चस्मात्षग्रन्तात् 'अच इः (उ० ४,१२४)'—इति इ-प्रत्यये णिलोपे धातोरन्त्यलोपश्छान्दसः।'—इति सायण॥

‡ प० १, १।

§ नि० १३. २।

‖ "नादे परि पातु मे मनः (ऋ० सं० ७, ६, ९, २)"—इति द्रष्टव्यः।

(१०) छन्दः*। छन्दतिरर्च्चतिकर्मा (३३४पृ०)। असुन्। 'छद आच्छादने (चु०प०)'। 'छदेश्च†'—इत्यसुन्। आच्छादयति स्तोत्रैः। निगमोऽन्वेषणीयः॥

(११) स्तुप्‡। स्तोभतिरर्च्चतिकर्मा (३३२पृ०)। क्विप्। निगमोऽन्वेषणीयः§॥

(१२) रुद्रः‖। रौतेः क्विप्, रुत् शब्दः; मत्वर्थीयोरः। स्तोत्रलक्षणशब्दवानित्यर्थः। "त्राणा रुद्रेभिर्वसुभिः पुरोहितः (ऋ०सं० १,४,२३,३)"—इति निगमः॥

(१३) कृपण्युः॥

॥ इति त्रयोदश स्तोतृनामानि॥ १६॥

**यज्ञः(१)। वेनः(२)। अध्वरः(३)। मेधः(४)। विदथः(५)। नार्यः(६)। सवनं(७)। होत्रा(८)। इष्टिः(९)। देवताता(१०)। मखः(११)। विष्णुः(१२)। इन्दुः(१३)। प्रजापतिः(१४)। घर्म्म(१५) इति पञ्चदश यज्ञनामानि¶॥ १७॥**

---

* निरु० ७, १२।

† कौमुदीमते तु चन्देश्छन्दो भवति; तथाचोणादिसूत्रम्—'चन्देरादेश छः। ४, २१९'—इति।

‡ "स्तूपः" निरु० १०, ३३।

§ "अभ्यनूषत स्तुभः (ऋ० सं० ७, २. २०, ३)"—इति द्रष्टव्यः।

‖ प० ५, ४,। निरु० १०, ५. ८. ११, १४।

(६) "नारी" ग. C. D.F।

¶ "इति यज्ञस्य" ग। इह च सन्ति पाठव्यतिक्रमाः।

(१) यज्ञः* । 'प्रख्यातं यजतिकर्मेति नैरुक्ताः (३,१९)'—इत्यादि भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादितः । यजेः 'यजयाचयतविच्छप्रच्छरक्षो नङ् (३,३,९०)' । यजनम् । इज्यन्तेऽत्र देवताः । अन्येषु पृषोदरादित्वेन रूपसिद्धिः । "यज्ञेयज्ञे न उदव (ऋ० सं० ३,८,२१,४)"—इति निगमः ॥

(२) वेनः† । व्याख्यातं मेधाविनामसु (३४० पृ०) गच्छत्यनेन स्वर्गम्, प्रक्षिप्यते देवतोद्देशेन वास्मिन् हव्यम्, तेनात्र देवताः काम्यन्ते वा । निगमोऽन्वेषणीयः ॥

(३) अध्वरः‡ । ध्वरतेर्बधकर्मणः 'पुंसि सञ्ज्ञायां घः (३,४,११८)' । नञ्-पूर्वः । ध्वरा हिंसा, तदभावो यत्र । अतएव शिष्टाः स्मरन्ति—'ओषध्यः पशवो वृक्षा स्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'—इति । तस्मादुपपन्नं यज्ञे हिंसा स्वर्जित्यामेतद्यज्ञीयवचनादहिंसा प्रतीयते । अन्यत्र विस्तरेणोपपादितः । अथ वा षष्ठ्यर्थे बहुव्रीहिः । अविद्यमानोऽध्वरो यस्य सोऽध्वरः रक्षोभिरहिंसितः । * * * । "राजन्तमध्वराणाम् (ऋ० सं० १,१,२,३)"—इति निगमः ॥

(४) मेधः§ । व्याख्यातं धननामसु (२२७ पृ०) । गच्छन्त्यत्र देवता हविर्ग्रहीतुं, दक्षिणार्थं वा सदस्यात्, हिनस्त्यनेन पापं वा । 'कर्त्ता यज्ञो द्रव्याणामृतसामर्थ्याद्धविषस्य सारभूतात्'—इति माधवः ।

---

* "यज्ञनीः" निरु० ७, ३० । "यज्ञिया" निरु० ७, २७. २९. ९, २७. १०, ८ ।

† पृ० १५ ।

‡ निरु० १, ८. ६, १२. १०, १९ । "अध्वर्युः" निरु० १, ८ ।

§ पृ० १५ ।

"मेधं जुषन्त वह्नयः (ऋ० सं० १,१,६,३)"—"तं मेधेषु प्रथमं देवयन्तीः (ऋ० सं० १,५,२५,३)"—इति निगमौ ॥

(५) विदथः*। 'विद ज्ञाने (अदा० प०)', 'विद विचारणे (रु० आ०)', 'विद्लृ लाभे (तु० उ०)', 'विद सत्तायाम् (दि० आ०)'। 'रुदिविदिभ्यां ङित् (उ० ३,११९)'—इति अथ-प्रत्ययः। ज्ञायते हि यज्ञः, लभते हि दक्षिणादिरत्र, विचार्यते हि विद्वद्भिः, भावयत्यनेन फलम्। "अधा जिव्री विदथमावदाथः (ऋ० सं० ८,३,२५,२)"—इति निगमः ॥

(६) नार्यः। 'नृ नये' क्र्यादिः। 'ऋहलोर्ण्यत् (३,१,१२४)'। नयति स्वर्गं कर्त्तारम्, नीयतेऽन्नमनुष्ठानेन वा। निगमोऽन्वेषणीयः ॥

(७) सवनम्†। 'षुञ् अभिषवे (स्वा० उ०)'। 'सुयुरुवृभ्यो युच् (उ० २,७०)'। अभि षूयतेऽस्मिन् सोमः। "उप नः सवना गहि (ऋ० सं० १,१,७,२)"—इति निगमः ॥

(८) होत्रा‡। व्याख्यातं वाङ्नामसु (८८पृ०)। हूयतेऽस्मिन् हविः। "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० सं० ७,६,१८,४)"—इति निगमः ॥

(९) इष्टिः। यजेरिषेर्वा क्तिन्। यजतेर्यज्ञवदर्थः, इष्यते हि सः। 'इष्टिशब्दो हविर्यज्ञे आद्युदात्तः, यज्ञमात्रे नोदात्तः'—इति माधवः। "यथातदुश्मसीष्टये (ऋ० सं० १,२,३०,२)"—इति निगमः ॥

---

* प० ४,२। निरु० १,७.२, १२.६, ७.८, १२.९,२।

† निरु० ५,२५।

‡ पु० १,११।

(१०) देवताता*। 'दिवु क्रीड़ादौ (दि०प०)'। दीव्यन्ति स्तुवन्त्यत्र देवताः। देव एव देवता। 'सर्वदेवात्तातिल् (४,४,१४२)' सप्तम्या आकारः (७,१,३९)। "त्रिर्देवताता त्रिरुताहृतं धियाः (ऋ०सं०१,३,४,५)"—"आ देवताता हविषा विवासति (ऋ० सं०१,४,२३,१)"—इति निगमौ॥

(११) मखः†। 'मह पूजायाम् (भ्र०प०)'। 'महेः ख च' ख-प्रत्ययो ह-लोपश्च। महन्त्यत्र देवताः। यद्वा; 'मख गतौ' घः। वेनवदर्थः। "मखः सहस्वदर्चति (ऋ०सं०१,१,१२,३)"—"विवक्ति वह्निः स्वपस्य तें मखः (ऋ०सं०७,६,१०,१)"—इति निगमौ॥

(१२) विष्णुः‡। 'विष्लृ व्याप्तौ (जु०उ०)'। 'विषेः किच्च (उ०३,३७)'—इति नु-प्रत्ययः। विशेषेणाप्नोति स्वर्गम्। "जरसि धृतमानसा जुष्टौ विष्णवे तस्यास्ते ( ? )"—इति निगमः॥

(१३) इन्दुः§। 'उन्दी क्लेदने (रु०प०)'। 'उन्दे रिच्चादेः (उ०१,१२)'—इत्युप्रत्ययः। क्लिद्यते सूयतेऽस्मिन् सोमः। निगमोऽन्वेषणीयः॥

(१४) प्रजापतिः‖। प्रजाशब्दः पतिशब्दश्च अपत्यनामसु (१७५ पृ०) ईश्वरनामसु (२९१पृ०) च व्याख्यातौ। प्रजापतिर्व्रह्मादिहेतुत्वात्। निगमोऽन्वेषणीयः॥

---

* निरु० ११, ४४।

† निरु० ३ २१।

‡ प० ४, २. ५, ६। निरु० १२. १८।

§ पु० १, ११।

‖ प० ५, ४। निरु० १०, ४२।

(१५) घर्मः*। 'घृ क्षरणदीप्त्योः (भू० प०)'। म-प्रत्ययः। क्षरत्यस्मिन् सोमः, दीप्यन्तेऽत्राग्नय इति वा। "धर्मस्वेदेभिर्द्रविणं व्यानट् (ऋ० सं० ८,२,१६,१)"—"सत्यैः कव्यैः पितृभिर्धर्मसुणा (ऋ० सं० ७,६,१८,४)"—इति निगमौ॥

इति पञ्चदश यज्ञनामानि॥ १७॥

**भारताः(१)। कुरवः(२)। वाघतः(३)। वृक्तबर्हिषः(४)। यतस्रुचः(५)। मरुतः(६)। सबाधः(७)। देवयव(८) इत्यष्टावृत्विङ्नामानि†॥ १८॥**

(१) भारताः। 'भृञ् भरणे (भू० उ०)'। 'भृमृदृशियजिपर्वपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३,१०७)'। 'यज्ञद्वारेण नून्, सम्भरतीति' स्कन्दस्वामी। बिभर्त्तेर्वातच्। 'एध्यन्ते' दक्षिणाभिः। "अमन्थिष्टां भारता (ऋ० सं० ३,१,२३,२)"—इति निगमः॥

(२) कुरवः‡। 'कॄ विक्षेपणे (तु० प०)'। 'कृग्रोरुच्च (उ० १,२४)'—इति कु-प्रत्ययः। विक्षिपत्यहानि कर्माणि। यद्वा; करोतेर्बाहुलकादुलम्। कुर्वन्ति कर्माणि। निगमोऽन्वेषणीयः॥

---

* पु० १,९।
(१) "भरताः" काशिकोपु सर्वत्र।
(७) "सबाधः। मरुतः"—इति ग।
† "इत्यृत्विजाम्" ग।
‡ निरु० ६,२१।

(३) वाघतः*। व्याख्यातं मेधाविनामसु (३४४ पृ०)। वहन्ति हवींषि। "उप ब्रह्माणि वाघतः (ऋ० सं० १,१,५,२)"—इति निगमः॥

(४) वृक्तबर्हिषः। 'वृजी वर्जने (रु० प०)'। अत्र छेदनार्थः। निष्ठा; 'ओदितो निष्ठायाम् (७,२,१४)'—इतीट्-प्रतिषेधः। बर्हिः-शब्दो व्याख्यातो महन्नामसु (१२३ पृ०)। वृक्तं बर्हिर्यैः। "नासत्यो वृक्तबर्हिषः (ऋ० सं० १,१,५,३)"—इति निगमः॥

(५) यतस्रुचः। 'यमु उपरमे (भू० प०)' निष्ठा; 'स्रु गतौ (भू० प०)'। 'स्रुवः कः-चिक् च (उ० २,५७-५८)'—इति चिक् प्रत्ययः, इकार-ककाराविसञ्ज्ञकौ। उद्यताः स्रुवो जुह्वाद्या यैः। निगमोऽन्वेषणीयः॥

(६) मरुतः†। व्याख्यातं हिरण्यनामसु (२२ पृ०)। "बृहदिन्द्राय गायत मरुतः (ऋ० सं० ६,६,१२,१)"—"आर्चन्नत्र मरुतः सस्मिन्नाजौ (ऋ० सं० १,४,१४,५)"—इति निगमौ॥

(७) सबाधः। 'बाधृ लोडने (भू० आ०)', क्विप्। बाधा सह वर्त्तते इति सबाधः। राक्षोघ्नमन्त्रोच्चारणं रक्षोबाधनात्। "तं सबाधो यतस्रुचः (ऋ० सं० ३,१,२९,१)"—इति निगमः॥

(८) देवयवः‡। देव-शब्दोपपदात् यातेः 'मृगय्वादयश्च (उ० १,३६)'—इति कु-प्रत्ययान्तो निपात्यते। देवान् यान्ति मनसा हविःप्रदानसमये। निगमोऽन्वेषणीयः॥

इत्यष्टाष्टलिङ्नामानि॥ १८॥

---

* पृ० १५।

† पृ० १,२।

‡ "देवया" निघ० १२,५।

ईमहे[१]। यामि[२]। मन्महे[३]। दद्धि[४]। शग्धि[५]। पूर्द्धि[६]। मिमिड्ढि[७]। मिमीहि[८]। रिरिड्ढि[९]। रिरीहि[१०]। पीपरत्[११]। यन्तारः[१२]। यन्धि[१३]। इषुध्यति[१४]। मदेमहि[१५]। मनामहे[१६]। मायत[१७] इति सप्तदश याच्ञाकर्माणः* ॥ १९ ॥

(१) ईमहे। 'ई गतौ' दिवादिः। 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुक्। "इतो वा सातिमीमहे (ऋ० सं० १,१,१२,५)"—इति निगमः॥

(२) यामि†। 'या प्रापणे' अदादिः। "तत्त्वा यामि ब्रह्मणा वन्दमानः (ऋ० सं० १,२,१५,१)"—इति निगमः॥

(३) मन्महे‡। 'मनु अवबोधने' तनादिरात्मनेपदी। 'लोपश्चास्यान्यतरस्यां म्वोः (६,४,१०७)'—इति उ-प्रत्ययस्य लोपः। "वयं हि ते अमन्महि (ऋ० सं० १,२,३१,६)"—इति निगमः। 'ईमहे, यामि, मन्महे, इति याच्ञाकर्मसु पाठात्'—इति स्कन्दस्वामी॥

---

(४) "दग्धि" ग. C. D. F।

(६) इतोनन्तरमिहैव "रिरीहि (१०)" ग।

(७) दृश्यते चैतत् "रिरिड्ढि" इत्यनन्तरम् ग।

(१३) "यन्ति" ग. C. D. F।

* "इति याञ्चा कर्माणः "ग। "इति पञ्चदश याञ्चाकर्माणः"—इति च। तत्र तत्र च "मिमिड्ढि", "रिरिड्ढि" इति।

† निरु० २, १।

‡ "मन.महे" निरु० ६, २५।

(४) दद्धि । 'दद दाने' भ्वादिः । व्यत्ययेन शपः श्लुः । 'हुझल्भ्यो हेर्धिः (६,४,१०१)' । भाष्यं द्रष्टव्यम् ॥

(५) शग्धि* । 'शक्लृ शक्तौ' स्वादिः । पूर्ववत् श्लुः । 'झलाञ्जश् झशि (८,४,५३)' ॥

(६) पूर्द्धि† । 'पॄ पालनपूरणयोः' क्र्यादिः प्वादिश्च । व्यत्ययेन शप्, 'बहुलं छन्दसि (२,४,७३)'–इति लुक् । श्रुशृणुपॄकृवृभ्यश्छन्दसि (६,४,१०२)'—इति धि-भावः । "शग्धि पूर्द्धि प्र यंसि च (ऋ०सं०१,३,२५,४)"—"रायस्पूर्द्धि स्वधावोऽस्ति (ऋ०सं० १,३,१०,२)"—इति निगमौ । "शाकी भव यजमानस्य चोदिता (ऋ०सं० १,४,१०,३)"—इत्यत्र, "शग्धि पूर्द्धि (ऋ०सं० १,३,२५,४)"—इत्यत्र च 'शग्धिपूर्द्धीति याच्ञाकर्मसु पाठात् शक्तिपृणाती याच्ञाकर्माणौ'–इति स्कन्दस्वामिभाष्ये उक्तम् ॥

(७) मिमिड्ढि । 'मिह सेचने (भ्वा०प०)' । 'बहुलं छन्दसि (२,४,७६)'—इति शपः श्लुः, छान्दसत्वात् ढलोपाभावश्च ॥

(८) मिमीहि‡ । 'माङ् माने' जुहोत्यादिः । व्यत्ययेन हिः । 'भृञामित् (७,४,७५)' । 'ई हल्यघोः (६,४,११३)' । "यत् सीं वरिष्ठे बृहती विमिन्वन् (ऋ०सं० ३,८,८,१)"—इत्यत्र 'मिमीहि इति याच्ञाकर्मसु पठ्यते, तस्येदं रूपम्; विविधं याचन्' —इति हरदत्त-भाष्ये दृष्टम् ॥

---

* "शेकुः", "आशेकुः" निरु० ५, २५. १२, २२. ७, २० ।

† निरु० ४, २ ।

‡ निरु० "अमिमीत" ९, ११. "मिमान" ८, १२. "व्यमिमीत" ८, २१ ।

(९) रिरिड्ढि। 'रिह कत्थने' तौदादिकः*। पूर्ववत् श्लुः, ढलोपाभावश्च ॥

(१०) रिरीहि। 'रीङ् गतौ'। व्यत्ययेन परस्मैपदं, हौ शपः श्लुः। "प्रजावती रिन्द्रा गोष्ठे रिरीहि (ऋ० सं० ८,८,२७,३)"—इति निगमः॥ 'सङ्गायेत्यर्थमवोचद्' भट्टभास्करमिश्रः॥

(११) पीपरत्†। पृणातेर्णिचि, लुङि, उपधाह्रस्वत्वे, द्वित्वे, सन्वद्भावादित्वे, 'दीर्घोलघोः (७,४,९४)', "ऋतश्च (७,४,९२)', 'बहुलं छन्दस्यमाङ्योगेऽपि (६,४,७५)'—इत्यड़भावः॥

(१२) यन्तारः। 'यमु उपरमे (भ्वा० प०)'। तृच्। जस्। "इन्द्र इन्द्रायः चयति अयन्ता (ऋ० सं० १,४,११,४)"—इति निगमः॥

(१३) यन्धि‡। 'यमु उपरमे (भ्वा० प०)'। पूर्ववच्छपो लुक्, हेः 'वा छन्दसि (३,४,८८)'—इति हेरपित्वे, 'अङितश्च (६,४,१०३)'—इति धीभावो मकारलोपाभावश्च। "उरु णो यन्धि जीवसे (ऋ० सं० ६,५,३,२)"—इति निगमः॥

(१४)। इषुध्यति। 'इषु चरणे' कण्ड्वादिः। "विश्वाराय इषुध्यति (ऋ० सं० ४,३,४,१)"—इत्यत्र 'इषुध्यतिर्याच्ञाकर्मणः'—इत्युवटः॥

(१५) मदेमहि§। 'मदी हर्षग्लपनयोः' स्वरितेत्, लिङ्॥

(१६) मनामहे‖। 'म्ना अभ्यासे' व्यत्ययेनात्मनेपदम्, पाघ्रा-

---

* न दृश्यतेऽयं धातुपाठे, तत्र तु 'रिफ' इति फान्तः।

† निरु०—"अप्रायि" ९, २९. 'पारयन्ती' ९, १८. "आप्राः" १२, १६।

‡ निरु०—"यच्छत" १२, ४५. "यच्छताम्" ९, ३८. "यंसन्" ९, १९।

§ पु० १४।

‖ पु० इहैव (२)।

घ्मास्थाम्ना (७,३,७८)'–इत्यादिसूत्रेण मनादेशः । "सुम्नयो मनामहे (ऋ० सं० १,२,२१,३)"—इति निगमः ॥

(१७) मायते । नैरुक्तधातुः ॥

इति सप्तदश याच्ञाकर्माणः ॥ १९ ॥

दाति(१) । दाशति(२) । दासति(३) । राति(४) । रासति(५) । पृणक्षि(६) । पृणाति(७) । शिक्षति(८) । तुञ्जति(९) । मंहते(१०) इति दश दानकर्माणः* ॥ २० ॥

(१) दाति† । 'दाप् लवने' अदादिः, ददातेर्वा 'बहुलं छन्दसि (२,४,७३)'—इति शपोलुक् । "दाति प्रियाणि चिद्वसु (ऋ० सं० ३,५,८,३)"—इति निगमः ॥

(२) दाशति‡ । 'दाशृ दाने' स्वरितेत् । "धनं यस्ते ददाशमर्त्यः (ऋ० सं० १,३,८,४)"—इति निगमः ॥

(३) दासति§ । 'दासृ दाने' स्वरितेत् ॥

(४) राति‖ । 'रा दाने' अदादिः । "तस्य मे रास्व तस्य ते भक्षणाय ( ? )"—इति निगमः ॥

---

(६) "पृणक्ति" ग. C. D. F ।

(७) इतोऽनन्तरं "दृषति"—इत्यधिकम् ग. C. D. F ।

(९) नास्त्येतत् पदम् ग. C. D. F ।

* "इति दानकर्माणः" ग ।

† निरु०—"दाः" १०, १९. "दातवे" ४, १५ ।

‡ निरु०—'दाशति" १, ७. "ददाशः" ११, १४. "दाशुषे", "दाशुषः", "दाश्वांसः" ११, ११. १२, ४० ।

§ निरु०—"दासः" "दासपत्नी" २, १७ ।

‖ पु० १, १४ ।

(५) रासति। 'रासृ शब्दे' व्यत्ययेन परस्मैपदम्। "स नो रास-च्छुरुधश्चन्द्राग्राः (ऋ० सं० ४, ८, ६, ३)"—इति निगमः॥

(६) पृणक्ति। 'पृची सम्पर्के' रुधादिः। "पृणक्ति सानसिं क्रतुम् (ऋ० सं० ८, ७, २८, ४)"—इति निगमः॥

(७) पृणाति। 'पृ पालनपूरणयोः' क्र्यादिः स्वादिश्च। "यः पृणाति स ह देवेषु गच्छति (ऋ० सं० २, १, १०, ५)"—इति निगमः॥

(८) शिक्षति*। शकेः 'सनि मीमा (७, ४, ५४)'—इति इस्। 'अत्र लोपोऽभ्यासस्य (७, ४, ५८)', संयोगादिलोपः (८, २, २९) "यस्तुभ्यं दाशाद् यो वा ते शिक्षात् (ऋ० सं० १, ५, १२, ३)"—इति निगमः। 'शिक्षतिर्दानकर्मा पठितः'—इति स्कन्दस्वामिभाष्यम्॥

(९) तुञ्जति†। 'तुजि हिंसायाम् पालने च'। "तुञ्जे तुञ्जे य उत्तरे (ऋ० सं० १, १, १४, २)"—इति निगमः॥

(१०) मंहते‡। 'वृहि महि वृद्धौ' आत्मनेपदी। "स्तोतृभ्यो मंहते मघम् (ऋ० सं० १, १, २१, ३)"—इति निगमः॥

इति दश दानकर्माणः॥ २०॥

**परिस्रव(१)। पवस्व(२)। अभ्यर्ष(३)। आशिष(४) इति चत्वारोऽध्येषणाकर्माणः§॥ २१॥**

---

* निरु० १, ७।

† पु० २, १५।

‡ निरु० १, ७।

(१) "परिश्रव" ख।

§ "इत्यध्येषणाकर्माणः" ग।

(१) परिस्रव*। 'स्रु गतौ (भ्वा०प०)' परिपूर्वः। लोण्मध्यमैकवचनम्। "इन्द्रायेन्दो परि स्रव (ऋ०सं० ६,६,१४,३)"—इति निगमः॥

(२) पवस्व†। 'पूङ् पवने (भ्वा०उ०)'। "पवस्व सोम मन्दयन् (ऋ०सं० ७,२,१६,१)"—इति निगमः॥

(३) अभ्यर्ष‡। 'ऋष गतौ' तुदादिः। 'छन्दस्युभयथा (३,४,११७)'—इति शस्यार्द्धधातुकत्वे कित्त्वाभावाद् गुणः। "अभ्यर्ष स्वायुधा ( ? )"—इति निगमः॥

(४) आशिषः§। अश्नोतेर्लेट्। 'सिब्बहुलं लेटि (३,१,३४)', इट्, 'लेटोऽडाटौ (३,४,९४)'॥

इति चत्वारोऽध्येषणाकर्माणः॥ २१॥

## स्वपिति(१)। सस्ती(२)ति द्वौ स्वपितिकर्माणौ॥ २२॥

(१) स्वपिति‖। 'ञि ष्वप शयने' अदादिः। तिपि 'रुदादिभ्यः सार्वधातुके (७,२,७६)'—इतीट्। "यो दीघिनः स्वपिति ( ? )"—इति निगमः॥

(२) सस्ति¶। 'षस स्वप्ने' अदादिः। "सस्तु माता सस्तु पिता (ऋ०सं० ५,४,२२,५)"—इति निगमः॥

इति द्वे स्वपितिकर्माणौ॥ २२॥

---

* पु० २, १४।
† "पवते" पु० १, १४।
‡ "अर्षति" पु० २, १४।
§ पु० २, १८।
(२) "स्ति" च।
‖ पु० १४।
¶ नि०द०—"असस्तन" ११, १९. "ससतः" ४, १९।

**कूपः(१)। कातुः(२)। कर्त्तः(३)। वव्रः(४)। काटः(५)। खातः(६)। अवतः(७)। क्रिविः(८)। सूदः(९)। उत्सः(१०)। ऋश्यदात्(११)। कारोतरात्(१२)। कुशयः(१३)। केवट(१४) इति चतुर्दश कूपनामानि* ॥ २३ ॥**

(१) कूपः। कु-शब्दोपपदात् पिबतेः 'अन्येष्वपि दृश्यते (३, २,१०१)'—इति डः, 'अन्येषामपि दृश्यते (५,३,१३७)'—इति दीर्घः। कुत्सितं पानमत्र, कृच्छ्रसाध्यत्वाच्छौचासम्भवाद्वा। यद्वा; 'कुप क्रोधे' दिवादिः। इगुपलक्षणः कः, पृषोदरादित्वात् दीर्घः। कुप्यन्त्यस्मै मनुष्याः दूरादानजलत्वात्। यद्वा; कवतेर्गतिकर्मणः, 'कुयुभ्याञ्च (उ० ३,२५)'—इति प-प्रत्ययः, कित्वाद्दीर्घश्च। गम्यते जलार्थिभिः। "त्रितः कूपेऽवहितः (ऋ० सं० १,७,२३,२)"—इति निगमः॥

(२) कातुः। 'कै गै शब्दे (भ्रू० प०)'। 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन् (उ० १,६७)'—इति बाहुलकात्तुन्। शब्द्यते बहुलत्वादिना। यद्वा; क-शब्दे उपपदे अततेः 'कृन्दसीणः (उ०

(१) इदमेव पदं "क्रिविः (८)"—इत्यनन्तरम् ग।
(२) नास्त्येतत् पदम् ग।
(४) अस्य पुरस्तादेव "वव्रः (४) काटः (५)"—इति द्वे दृश्येते ग।
(६) इत उत्तरम् "अवटः"—इत्यधिकम् ग. C. D. F।
(८) "क्रविः" C. D. F।
(१२) "कारोतरः" ग।
* "इति कूपस्य" ग।

१,२)'—इति बाहुलकादुण् । कमुदकमस्मिन् अत्यते अधिगम्यते । निगमोऽन्वेषणीयः ॥

(३) कर्त्तः । करोतेर्वा हिंसार्थात् । 'हसिमृग्रिण्वामिदमिलूपूधू-र्विभ्यस्तन् (उ० ३,८३)'—इति बाहुलकात्तन् । क्रियते उत्पाद्यते पुरुषैः, हिंसन्त्यत्र चौराः पथिकादीनर्थवतः, कस्य ऋतः प्राप्तिरत्रेति वा । "कर्त्तमन्वस्य वित्तमादाय इन्वन्ति ( ? )"—इति निगमः ॥

(४) वव्रः । 'वृञ् सम्भक्तौ (स्वा० उ०)' । 'घञर्थे क-विधानम् (३,३,५८वा० २)'—इति कः । 'कृञादीनां के द्वे भवतः (३,३,५८वा० ३) । सम्भज्यते जलार्थिभिः । "व॒व्राँ अ॒नन्ताँ अ॒व॒-सा प॑दीष्ट (ऋ० सं० ५,७,८,२)"—इति निगमः ॥

(५) काटः । 'कटे वर्षावरणयोः (भू० प०)' घञ् । आव्रियते जलार्थिभिः । यद्वा ; 'अट पट गतौ (भू० प०)' घञ् । "का॒टे नि-बा॑ळ्ह ऋषि॑रह्वदूतये॑ः (ऋ० सं० १,७,२४,६)"—इति निगमः ॥

(६) खातः । 'खनु अवदारणे (भू० उ०)' । निष्ठा । निगमोऽन्वेषणीयः ॥

(७) अवतः* । अवपूर्वादततेः पचाद्यचि (३,१,१३४) शकन्ध्वादित्वात् पररूपम् (६,१,९४वा०) । अवातति खन्यमानोऽधोगच्छति "द्रो॑णाहावमव॒तमश्म॑चक्रम् (ऋ० सं० ८,५,१९,१)"—"आ॒दृ॑तासोऽव॒तासो॒ न क॒र्तृभि॑ः (ऋ० सं० १,४,२०,३)"—इति निगमौ ॥

(८) क्रिविः† । करोतेः कृणोतेर्वा 'कृविघृष्विछविस्थविकिकी-

* नि० ५, २६. १०, १३ ।
† नि० ६, ३० ।

दिवि (उ० ४,५६)'—इतीन्-प्रत्ययोरिदादेशश्च निपात्यते। कर्त्तृवदर्थः। "आत्र इन्द्र क्रिविं यथा (ऋ० सं० १,२,२८,१)"—इति निगमः॥

(९) सूदः। 'सूद क्षरणे हिंसायाञ्च (भ्वा० आ०)'। क्षरत्यस्माज्जलं, हिंसायां कर्त्तृवदर्थः। 'शोभनोदकः सुस्थिरोदकोवा सूदः'—इति हरदत्तमिश्रः। 'उदकस्योदः सञ्ज्ञायाम् (६,३,५७)' निगमोऽन्वेषणीयः॥

(१०) उत्सः*। उत्पूर्वात् सर्त्तेः सदेः स्यन्देर्वा ड-प्रत्ययः। स्यन्देर्यलोपो बाहुलकात्। उन्देर्वा 'उन्देर्नलोपश्च ( ? * )'—इति स-प्रत्ययः। उद्गच्छत्यस्मात् जलम्, स्यन्दते आर्द्रीक्रियते वा जलेन। "उत्सं न कञ्चिज्जनपानमक्षितम् (ऋ० सं० ७,५,२२,५)"—इति निगमः॥

(११) ऋश्यदात्। 'ऋषी गतौ (तु० प०)'। 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययो मूर्द्धन्यस्य शादेशो गुणाभावश्च निपात्यते। ऋश्यामृगाः। ऋश्यान् द्यति। 'आतोऽनुपसर्गे कः (३,२,३)'। पञ्चम्येकवचनम्। कूपोहि दुर्ग्रहजलत्वात् ऋश्यान् खण्डयति; खण्डितलञ्च जलादानेच्छा न करोति। "ध्रुवं वन्दनमृश्यदादुदूपथुर्युवं (ऋ० सं० ७,८,१६,३)"—इति निगमः॥

(१२) कारोतरात्। करणं कारः। करोतेर्घञ्। कारेण खननक्रियया उत्तरः अधिकः प्रदेशान्तरादुत्कृष्टो वा। यद्वा;

---

* निरु० १०, ९. ११।

उत्खातमुदकं यस्य सः कारोत्तरः कृतोदको वा । पृषोदरादित्वात् कारोतरः । पञ्चम्येकवचनम् । निगमोऽन्वेषणीयः* ॥

(१३) कुशयः । कौ शेते । 'अधिकरणे शेतेः (३,२,१५)'—इत्यच्-प्रत्ययः । निगमोऽन्वेषणीयः ॥

(१४) केवटः । 'केवृ सेवने (भू० आ०)' । 'शकादिभ्योऽटन् (उ० ४,७९)'—इत्यट्-प्रत्ययः । सेव्यते जलार्थिभिः । "माकीं सं शारि केवटे (ऋ० सं० ४,८,२०,२)"—इति निगमः ॥

इति चतुर्दश कूपनामानि ॥ २३ ॥

**तृपुः[1] । तक्वा[2] । रिम्वा[3] । रिपुः[4] । रिक्वा[5] । रिहायाः[6] । तायुः[7] । तस्करः[8] । वनर्गुः[9] । हुरश्चित्[10] । मुषीवान्[11] । मलिम्लुचः[12] । अघशंसः[13] । वृकः[14] इति चतुर्दशैव स्तेननामानि† ॥ २४ ॥**

(१) तृपुः । 'तृप प्रीणने (दि० प०)' । 'ईषेः किच्च (उ० १,१३)'—इति बाहुलकादुप्रत्ययः किच्च । परद्रव्यापहारात् तृप्यति । निगमोऽन्वेषणीयः ॥

---

(१) "त्रिपुः" ग. C. D. F । इतोऽनन्तरमेव 'रिपुः (४)"—इति ।
(२) "रितक्वा" ग. C. D. F । इतोऽनन्तरम् "चिक्वा"—इत्यधिकम् ग. C. F । D पुस्तके तु "वृक्वा"—इति ।
(३) "रिक्वा" ग, C. D. F ।
(६) नैतत् पदम् ग. C. D. F पुस्तकेषु ।
* य० वा० स० १९, १६ कण्डिकायां द्रष्टव्यः—"कारोतराभिषग्"-इति ।
† "इति स्तेनस्य" ग ।

(२) तक्वा। तकतिर्गतिकर्म्मा, 'तक हसने (भ्वा० प०)'। 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिप्। गच्छति मोषणार्थम्, मोषणेन वा सहते अभिभवति। "तक्वा न भूर्णिर्वना सिषक्ति (ऋ० सं० १,५,१०,१)"—इति निगमः॥

(३) रिभ्वाः। 'रभ राभस्ये (भ्वा० आ०)'। पूर्ववद्वनिप्। पृषोदरादित्वात् इकारो गुणाभावश्च। रभते मोषणक्रियां वेगेन करोति। निगमोऽन्वेषणीयः॥

(४) रिपुः। 'रिफ कत्थन-युद्ध-निन्दा-हिंसादानेषु (तु० प०)' 'ईषेः किच्च (उ० १,१३)'—इति बाहुलकादु-प्रत्ययः। "रिपति" केचित् पठन्ति। तत्र बाहुलकादेव फकारस्य पकारः। रिफति, मोषणार्थं युद्धते हिनस्ति वा निन्द्यते च सत्पुरुषैः। "मा नः स रिपुरीशत (ऋ० सं० १,२,११,१)"—इति निगमः॥

(५) रिक्वा*। 'रिचिर् वियोजने (रु० उ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति क्वनिप्। चकारस्य ककारो व्यत्ययेन। वियोजयत्यर्थैरर्थतः, वियुज्यते वा प्राणैः। निगमोऽन्वेषणीयः॥

(६) रिहायाः। 'रिह कत्थनादौ'—इति क्षीरस्वामी। 'परस्वेकृत्वधाविहायम्'—इत्यादिनासुनि आयुडागमो गुणाभावश्च निपात्यते। रिपुवदर्थः। निगमोऽन्वेषणीयः॥

(७) तायुः†। 'तायृ सन्तानपालनयोः (भ्वा० आ०)'। 'छन्दसीणः (उ० १,२)'—इति बाहुलकाद् गुणः। पाल्यते यस्मात् सर्वम्।

* "रारेक्" निरु० २, १९. ३, ६।
† निरु० ४, २४।

यद्वा; तसेरुपक्षयार्थात् पूर्ववद्गुणि बाहुलकात् सकारस्य यकारः। 'उपक्षीणोसाविह लोके आयुषा, यदा तदा राज्ञामारिष्यमाणत्वात्, परलोकेऽपि श्रमणधर्मकत्वात्'—इति स्कन्दस्वामी। "अप त्ये तायवो यथा (ऋ०सं० १,४,७,२)"—"उत स्मैनं वस्त्रमथिं न तायुम् (ऋ०सं० ३,७,११,५)"—इति निगमौ॥

(८) तस्करः*। तत्करोतीति विगृह्य 'दिवाविभानिशाप्रभा (३,२,२१)'—इत्यादिना ट-प्रत्ययः। 'करोति यत् पापकम्'—इति नैरुक्ताः। तच्छब्देन प्रकरणसामान्यादर्थप्राधान्याच्च पापकर्म-निर्देशमभिप्रेतमित्याह—'यत् पापकमिति नैरुक्ताः'—इति। वैयाकरणास्तु शब्दपरत्वात् सामान्येऽप्याहुः 'तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च (६,१,१५७ग०सू०)'—इति। तनोतेर्वा स्यात् सन्तानकर्मेति सम्मतम्। तच्च सन्ततकर्मत्वं दर्शयति—'दिवा पथि मोषणेन, रात्रौ सन्धिच्छेदनेन'—इति स्कन्दस्वामी। तनोतेः क्विपि न-लोपे तुकि चर्त्वम्। यद्वा; 'त्यजियजितनिभ्यो डित् (उ० १, १३१)'—इति अदि-प्रत्यये तत्। कर्मशब्दस्य मकारलोपः। पृषोदरादित्वात् रूपम्। "तनूत्यजेव तस्करा वनर्गू (ऋ०सं० ७,५, ३२,६)"—"तस्कराणां पतये नमः (य०वा०सं० १६,२१)"—इति निगमौ॥

(९) वनर्गुः†। वनशब्दोपपदात् गमेः मृगय्वादयश्च (उ० १, ३६)'—इति डु-प्रत्ययो रुडागमश्च निपात्यते। तस्करो हि मोषणार्थं सदा वनं गच्छति। निगमोऽन्वेषणीयः‡॥

---

* नि० ३, १४। † नि० ३, १४।

‡ पूर्वप्रदर्शितत्वात्र कुतो न गृह्यते (ऋ०सं०७,५ ३२,६)?

(१०) ऊरश्चित् । 'ह्वर्च्छा कौटिल्ये (भू० प०)' । क्विप् । 'राल्लोपः (६,४,२१)'—इति वकारलोपः । 'चिती सञ्ज्ञाने (भू० प०)' । क्विप् । ऊरः कौटिल्यानि चेतयते । यद्वा ; हरतेः 'अन्येभ्योपि दृश्यन्ते (३,२,७५)'—इति विचि गुणः, पृषोदरादित्वात् अकारस्योकारः । ऊरः अर्थानामाहर्तॄन्, चेतयतेः चिनोतेर्वा क्विप् । ऊरः हृतानर्थान् सञ्चिनोति । अपिशब्दात् अत्र कर्मणि विच् । 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इत्यलुक् । "अप्रप्रोथन्तः सनुतर्ऊरश्चितः (ऋ० सं० ७,४,२४,५)"—इति निगमः ॥

(११) मुषीवान् । 'मुष स्तेये (क्र्या० प०)' । अच् । 'हृदिकारादक्तिनः (४,१,४५वा०)'—इति ङीष् । मुषी मोषणमस्यास्ति । 'छन्दसीवनिपौ (५,२,१२२वा० २)'—इति वनिप् । "मुषीवाणं ऊरश्चितम् (ऋ० सं० १,३,२४,३)"—इति निगमः । अत्र 'परोक्षहर्त्ता चौरो मुषीवान्, प्रत्यक्षहर्त्ता ऊरश्चित्'—इति माधवः ॥

(१२) मलिम्लुचः । मलमस्यास्ति । 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः (५,२,११४)'—इति मलिनो निपात्यते । 'म्लुच स्तेयकरणे (भू० प०)' । 'इगुपधज्ञाप्रीकिरः कः (३,१,१३५)' । मलिनश्चासौ म्लुचश्च मलिम्लुचः । पृषोदरादित्वेन न-लोपः । निगमोऽन्वेषणीयः । * * * ॥

(१३) अघशंसः । आङ्पूर्वात् हन्तेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः । पृषोदरादित्वात् आङो ह्रस्वत्वं हकारस्य घत्वञ्च । शंसेः पचाद्यच् । आहन्ता, बधस्वभावः, आशंसमानश्च । "अघशंसस्य कस्यचित् (ऋ० सं० १,३,२४,४)"—इति निगमः ॥

(१४) वृकः*। व्याख्यातमृत्विङ्नामसु (२५१पृ०)। वारको मार्गस्य। "यो नः पूषन्नघो वृकः (ऋ०सं०१,३,२४,२)"—इति निगमः॥

॥ इति चतुर्दश स्तेननामानि॥ २४॥

**निण्यम्[१]। सस्वः[२]। सनुतः[३]। हिरुक्[४]। प्रतीच्यम्[५]। अपीच्य[६]मिति षण्निर्णीतान्तर्हितनामधेयानि†॥२५॥**

(१) निण्यम्‡। निर्-शब्दपूर्वात् नयतेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यत् प्रत्ययष्टिलोपो रेफलोपश्च निपात्यते। निर्णीतं बहिर्नीतम्, निर्गतमन्तर्हितं वा। "वृत्रस्य निण्यं वि चरन्त्यापः (ऋ०सं०१,२,३७,५)"—"निण्यः सन्नद्धो मनसा चरामि (ऋ०सं०२,३,२१,२)"—इति निगमौ॥

(२) सस्वः। सम्पूर्वात् स्वरतेर्गतिकर्मणो विचि रपर-गुणः। समोऽन्तलोपः। सम्यगन्तर्गतं विनिर्गतं वा। "सस्वर्ह् यन्मरुतो गोतमोवः (ऋ०सं०१,६,१४,५)"—"यत् सस्वर्ता जिहीळिरे यदाविः (ऋ०सं०५,४,२८,५)"—इति निगमौ॥

(३) सनुतः§। (४) हिरुक्‖। स्वरादिः। "सनुतर्युयोधि तं

* पृ० १८।

(५) "प्रतीच्यम्" ख।

† "षट्"—इत्येव नास्तीह ग।

‡ निरु० ४, १६।

§ निरु० ६, ७।

‖ निरु० २, ८।

ततः (ऋ० सं० ६, ६, ३६, ३)"—"य इं दुदर्श हिरुगिन्नु तस्मात् (ऋ० सं० २, ३, २०, २)"—इति निगमौ ॥

(५) प्रतीच्यम्* । (६) अपीच्यम्† । अपीच्यमपगतमपचितम् (निरु० ४, २५)'—इत्यादिभाष्ये 'प्रत्यपचितं स्थितम्'—इति स्कन्द-स्वामी । प्रतिपूर्वात् अपमात्रपूर्वाच्च चिनोतेः अघ्न्यादित्वात् य-प्रत्य-यष्टिलोपादि च निपात्यते । प्रतीच्यस्य निगमोऽन्वेषणीयः‡ ॥ "नाम त्वष्टुरपीच्यम् (ऋ० सं० १, ६, ७, ५)"—"(य उस्राणामपी-च्या३ (ऋ० सं० ६, ३, २६, ५)"—इति निगमौ ॥ 'यउस्राणाम-पीच्या'—इत्यत्र 'अपिपूर्वादञ्चतेः 'ऋत्विगित्यादिना (३, २, ५९) क्विन् प्रत्ययः, ततो 'भवे छन्दसि च (४, ४, ११०)'—इति यत्, 'अचः (६, ४, १३८)'—इत्यकारलोपः, 'चौ (६, ३, १३८)'—इति पूर्वपदस्य दीर्घः । 'अपीच्योऽप्रकाशः'—इति भट्टभास्करमिश्रः ॥

इति षट् निर्णीतान्तर्हितनामानि ॥ २५ ॥

**आके[१] । पराके[२] । पराचैः[३] । आरे[४] । परावत[५] इति पञ्च दूरनामानि§ ॥ २६ ॥**

(१) आके‖ । (२) पराके¶ । आङ्पूर्वात् परापूर्वाच्च एते

---

* "प्रतीकम्" निरु० ७, ३१ ।
† निरु० ४ ; २५ ।
‡ ऋ० सं० ८, ४, ६, ८ द्रष्टव्यः ।
§ "इति दूरस्य" ग ।
‖ पृ० २, १६ ।
¶ निरु० ५, ९ । "परा" निरु० १, ३ ।

'पिनाकादयश्च (उ० ४,१५)'—इति आक-प्रत्ययो धातुलोपश्च निपात्यते। यद्वा; आङ्पूर्वात् परापूर्वाच्च किरतेः 'अन्येष्वपि (३,२,१०१)'—इति डः। आकीर्णं पराकीर्णं च तद् विक्षिप्तमिव भवति आके निगमोऽन्वेषणीयः॥ "त्वयन्तमस्य रजसः पराके (ऋ० सं० ५,६,२५,५)"—इति निगमः॥

(३) पराचैः*। 'नीचैरिति वदन्नयं पराकैः'—इति भट्टभास्करमिश्रः। निगमोऽन्वेषणीयः॥

(४) आरे। अव्ययम्। "न हि त्वदारे निमिषश्चनेशे (ऋ० सं० २,७,१०,१)"—इति निगमः॥

(५) परावतः†। दूरयतेर्वहतेर्गतिकर्मणो वा संसाधनेऽर्थे वर्त्तमानात् प्रोपसर्गात् परोपसर्गाद्वा 'उपसर्गाच्छन्दसि धात्वर्थे (५,१,११८)'—इति वतिः। पृषोदरादित्वात् प्रशब्दस्य पराभावः। प्रकर्षेण दूरति विक्षिप्तं परागतमिव वा तत् भवति। "परावतं परमां गन्तवा उ (ऋ० सं० ८,५,३,४)"—"ससारसीं परावतः (ऋ० सं० ३,६,२१,१)"—इति निगमौ॥

इति पञ्च दूरनामानि॥ २६॥

**प्रत्नम्(१)। प्रदिवः(२)। प्रवयाः(३)। सनेमि(४)। पूर्व्यम्(५)। अह्नाये(६)ति षट् पुराणनामानि‡॥ २७॥**

---

* निरु० ११, २५।

† निरु० ७, २६. ११, ४८।

(५) "पूर्वा" च।

‡ "इति पुराणस्य" ग।

(१) प्रत्नम्* । 'नश्च पुराणे प्रात् (५,४,२५ वा० २)'—इति न-प्रत्ययः । "तम् प्रत्नथा पूर्वथा विश्वथेमथा (ऋ० सं० ४,२,२३, १)"—इति निगमः ॥

(२) प्रदिवः† । "यदीमनु प्रदिवः (ऋ० सं० २,२,८,३)"—इत्यत्र पुंल्लिङ्गद्विवचनान्तेन, "तत्रं राजाना प्रदिवः (ऋ० सं० ३,२, २३,५)"—इत्यत्र, षष्ठेकवचनान्तेन, "इन्द्राय सोमाः प्रदिवः (ऋ० सं० ३,२,१९,२)"—इत्यत्र प्रथमाबहुवचनान्तेन च प्रदिवइत्येव सामानाधिकरण्यदर्शनात् सकारान्तमेतदव्ययमित्याहुः । इन्द्रार्थत्वेनानादिकालप्रवृत्ता इत्यभाषयत् । तेन प्रगतानि दिनान्यस्य पृषोदरादित्वान्नकारस्य वकारः इत्यादि व्युत्पत्तिः । निगमेषु वचनव्यत्ययस्त्वाश्रयणीयएव ॥

(३) प्रवयाः । प्रगतं वयो यस्य । वयः कालमात्रमत्र । निगमोऽन्वेषणीयः ॥

(४) सनेमि‡ । अव्ययम् । "सनेम्यस्मद्युयवन्नमीवाः (ऋ० सं० ५,४,५,७)"—"सनेमि सख्यं स्वपस्यमानः (ऋ० सं० १,५,२, ४)"—"सनेम्यभ्वं मरुतो जुनन्ति (ऋ० सं० १,४,८,३)"—इति निगमाः ॥

(५) पूर्व्यम् । 'पूर्व पूरणे (भू० प०)'। पचाद्यच् (३,१,१३४)। वयः प्रवृत्तिं पूरयतीति, पूर्वस्मिन् काले भवं पूर्व्यम् 'भवे छन्दसि

---

* निरु० १२, ३२।
† निरु० ४, ८. ८, १९।
‡ निरु० ४, २१।

(४,४,११०)'—इति यत्। यद्वा; 'पूर्वैः कृतमिनयौ च (४,४,१३३)' —इति यः। "पूर्व्यं होतरस्य नः (ऋ०सं० १,२,२०,५)"—"यः स्तोमेभिर्वावृधे पूर्व्येभिः (ऋ०सं० ३,२,११,३)"—इति निगमौ ॥

(६) अह्नाय। अव्ययम्। निगमोऽन्वेषणीयः ॥

॥ इति षट् पुराणनामानि ॥ २७ ॥

**नवम्(१)। नूत्नम्(२)। नूतनम्(३)। नव्यम्(४)। इदा(५)। इदानी(६) मिति षडेव नवनामानि* ॥ २८ ॥**

(१) नवम्†। * * *। यद्वा; 'णु स्तुतौ (अदा०प०)'। 'ऋदो रप् (३,३,५७)'। नूयते स्तूयते, अचिरकृतत्वेन रमणीयत्वात् इति। "नवेन पूर्वं दयमानास्य (? ‡)"—इति निगमः॥

(२) नूत्नम्। नौतेरेव। 'रास्नासास्ना (उ० ३,१३)'—इत्यादिना न-प्रत्ययोदीर्घस्य निपात्यते। "नूयते नूत्ना इरिन्द्र ते वयमूती (ऋ०सं० ६,२,२,२)"—इति निगमः॥

(३) नूतनम्§। नवस्य नू-आदेशः, 'वप्नतप्तनथखास्य प्रत्यया वक्तव्याः (५,४,२ ५वा०१)'—इति तनप्-प्रत्ययः। "ईड्यो नूतनैरुत (ऋ०सं० १,१,१,२)"—इति निगमः॥

(४) नव्यम्‖। नवमेव नव्यम्। 'शाखादिभ्योयत् (५,३,१०३)'

---

* "इति नवस्य" ग।

† निरु० ४, १५।

‡ "नवोनवो भवति जायमानः" ऋ० सं० ८, ३, २३, ४।

§ निरु० ७, १६।

‖ निरु० ३, ३. ६, ९।

—इति स्वार्थे यत्। यद्वा; नौतेः 'अचोयत् (३,१,९७)'—'वान्तोयि प्रत्यये (६,१,७९)'। "इन्द्राग्नी स्तोमं जनयामि नव्यम् (ऋ० सं० १,७,२८,२)"—इति निगमः॥

(५) इदा। 'तयोर्दाहिलौ च छन्दसि (५,३,२०)'—इति इदं-शब्दात् सप्तम्यन्तात् दा-प्रत्ययः। "इदा हि व उपस्तुतिम् (ऋ० सं० ६,२,२३,१)"—इति निगमः॥

(६) इदानीम्। 'दानीञ्च (५,३,१८)'—इति तस्मादेव दानीं-प्रत्ययः। "इदानीमह्न उपवाच्यो नृभिः (ऋ० सं० ३,८,५,१)"—इति निगमः॥

॥ इति षडेव नवनामानि ॥ २८ ॥

प्रपित्वे(१)। अभीके(२)। दभ्रम्(३)। अर्भकम्(४)। तिरः(५)। सतः(६)। त्वः(७)। नेमः(८)। ऋक्षाः(९)। स्तृभिः(१०)। वम्रीभिः(११)। उपजिह्विका(१२)। ऊर्दरम्(१३)। कृदरम्(१४)। रम्भः(१५)। पिनाकम्(१६)। मेना(१७)। ग्नाः(१८)। शेपः(१९)। वैतसः(२०)। अया(२१)। एना(२२)। सिषक्तु(२३)। सचते(२४)। भ्यसते(२५)। रेजते(२६) इति षड्विंशति द्विश उत्तराणि नामानि* ॥ २९ ॥

प्रपित्वेइत्यादीनि भाष्यकारेणैव निरुक्तानि (निरु० ३,२०-२१)॥२९॥

---

(१५) "रम्भः" A।
(२१) "अया"—इत्येवरूव A।
(२३) "सिषक्ति" ग. C. D. F।
(२५) "नंसते" ग।
* "इति द्विशः" ग।

स्वधे[१] । पुरन्धी[२] । धिषणे[३] । रोदसी[४] । क्षोणी[५] । अम्भसी[६] । नभसी[७] । रजसी[८] । सदसी[९] । सद्मनी[१०] । घृतवती[११] । बहुले[१२] । गभीरे[१३] । गम्भीरे[१४] । ओण्यौ[१५] । चम्वौ[१६] । पार्श्वौ[१७] । मही[१८] । उर्वी[१९] । पृथ्वी[२०] । अदिती[२१] । अह्नी[२२] । दूरेअन्ते[२३] । अपारे[२४] अपारे इति चतुर्विंशतिर्द्यावापृथिवीनामधेयानि नामधेयानि* ॥ ३० ॥

उर्व्यृहन्महद्गयइरज्यतिशिम्बातानिर्णिगसेमाकेतुर्वट्चिक्यद्विकमिदमिवार्चतिविप्रोरेभोयज्ञोभरताईमहेदातिपरिस्रवस्वपितिकूपस्तृपुर्निण्यमाकेप्रत्नन्नवम्प्रपित्वेस्वधे चिंशत्† ॥

इति निघण्टौ तृतीयाध्यायः समाप्तः‡ ॥ ३ ॥

---

(४) इत उत्तरम् "रोधसि"—इत्यधिकम् ग. C. D. F ।

(७) नास्त्येतत् ग. C. D. F ।

(१५) इतोऽनन्तरम् "नप्त्री"—इत्यधिकम् ग ।

(१६) "चम्व्रौ" ग. C. D. F ।

(१७) "पार्श्व्रौ" ग. C. D. F ।

(२०) इतउत्तरम् "बृहती"—इत्यधिकम् ग. C. D. F ।

(२१), (२२) इमे द्वे न दृश्येते ग. C. D. F पुस्तकेषु ।

(२३) क-ग-C-D-F-पुस्तकातिरिक्तेषु "अन्ते"—इत्येव, परं तत् देवराजसायणयोरनभिमतम् ।

* "इति द्यावापृथिव्योः" ग ।

† ख-चातिरिक्तेषु नैवं सङ्ग्रहवाक्यमस्ति ।

‡ "इति षष्ठोऽध्यायः" ग (द्रष्टव्यं पुरस्तात्) । "नैघण्टुके" ङ ।

(१) स्वधे*। व्याख्यातमन्ननामसु (१२८-२०८पृ०)। स्वेनात्मना भूतग्रामं धारयतः, स्वं धनं धीयते अनयोरिति वा। द्यावापृथिवीनामसु सर्वत्र द्विवचनान्तत्वम्। तथाच "आदु ब्रुवाते मिथुनानि नाम (ऋ०सं० ३,३,२४,२)'—इत्यत्र, स्कन्दस्वामी—'मिथुनानि द्विवचनसंयुक्तानि नामानि 'स्वधे पुरन्धी'—इत्यादीनि स्तोतृभ्यः'—इति† ॥

(२) पुरन्धी‡। पुराणि धीयन्तेऽनयोः। 'कर्मण्यधिकरणे च (३,४,९३)'—इति कि-प्रत्ययः। पृषोदरादित्वान्मकार उपजनः। निगमोऽन्वेषणीयः ॥

(३) धिषणे§। व्याख्यातं वाङ्नामसु (९१पृ०)। स्वं रचितुं प्रगल्भे समर्थे, धारयित्र्यौ वा देवमनुष्यादीन्, श्लाघ्यते, स्तूयते वा। निगमोऽन्वेषणीयः ॥

(४) रोदसी‖। 'इतीदमस्ति स्त्रीलिङ्गद्विवचनान्तम्, द्यावापृथिव्योर्वर्त्तमानं चास्ति नपुंसकद्विवचनान्तम्, अस्ति चाव्ययम्। तत्र निगमानां साधारण्यात् तेषां त्रयाणामपि साधारणोऽयं पाठः'—इत्याहुः। 'प्रस्तरस्यापि विभुत्वात् "रोदस्यौ रोदसी च ते (?)"—इत्यत्र आद्य ईबन्तो दिवि भुवि च वर्त्तते; अन्त्यः सान्तः'—इति क्षीरस्वामी। तत्र रुधेरसुन्, पृषोदरादित्वात् धकारस्य

---

* पृ० १, १२।

† "मिथुनानि द्वन्द्वानि नाम उर्वी पृथ्वी बहुले दूरेअन्ते रोदसी पुरोहिते इत्यादीनि नामानि'—इति तत्रैव सायणः।

‡ प० ४, २। निरु० ६, १३. ११, १. १२, १०।

§ पृ० १, ११।

‖ प० ५, ५। निरु० ४, ६. ६, १. १०, ४. ११, ९; ५०. १२, २६; ४६।

दकारः; स्त्रीलिङ्गे तु 'उगितश्च (४,१,६)'—इति ङीप्, 'वा छन्द-सि (६,१,१०६)'—इति पूर्वसवर्णः। आभ्यां हि विविधं रुद्धानि सर्वभूतानि। "नमो दिवे बृहते रोदसीभ्याम् (ऋ०सं०२,१,२६,६)"—"होतारं सत्ययजं रोदस्योः (ऋ०सं०३,४,२०,१)"—"इमे चिदिन्द्र रोदसी अपारे (ऋ०सं०३,२,१,५)"—इति निगमाः। "विषितस्तुका रोदसी नृमणाः (ऋ०सं०२,४,४,५)"—इत्यादौ अन्तोदात्तो रोदसी-शब्दो रुद्रपत्नीवचनः'—इति माधवः।

(५) क्षोणी*। व्याख्यातं पृथिवीनामसु (१०पृ०)। "अयः क्षोणी सचते माहिना वाम् (ऋ०सं०२,४,२३,५)"—इति निगमः॥

(६) अम्भसी†। व्याख्यातमुदकनामसु (९९पृ०)। बाहुलका-दत्रापि नुम्। यद्वा; अम्भउदकमनयोरस्ति, मत्वर्थीयस्य लुक्। एक-त्रावशिष्टमपरत्रावशिष्यमाणमादित्यमण्डलस्थम्। निगमोऽन्वेषणीयः॥

(७) नभसी‡। 'णह बन्धने (दि०उ० )'। 'नहेर्दिवि भश्च (उ०४,२०५)'—इति असुन्। साहचर्याद् उभे अपि नभः-शब्दे-नोच्यते। सम्बध्यते पुण्यवद्भिः। निगमोऽन्वेषणीयः॥

(८) रजसी§। 'रञ्ज रागे (भ्वा०उ०)'। 'भूरञ्जिभ्यां कित् (उ०४,२११)'—इत्यसुन्। 'रजकरजनरजःसूपसंख्यानम्' इति वा न-लोपः रजके

---

* पृ० १, १।
† पृ० १, १२।
‡ पृ० १, ४।
§ पृ० १, ७।

स्वगुणे भूतानां 'रञ्जोरजतेर्गतिकर्मणः'—इति माधवः। गम्यते पुण्यवद्भिः। निगमोऽन्वेषणीयः॥

(९) सद्सी। सदेरसुन्। सीदन्त्यनयोर्देवमनुष्यादयः। निगमोऽन्वेषणीयः* ॥

(१०) सद्मनी† । सदेरेव मनिन्। "पुराण्योः सद्मनोः केतुरन्तः (ऋ० सं० ३,३,१८,२)"—इति निगमः। भाष्यं द्रष्टव्यम्॥

(११) घृतवती‡ । उदकवत्यौ। निगमोऽन्वेषणीयः॥

(१२) बहुले। 'बंहिष्ठः'—इति महन्नामसु व्याख्यातम् (३०५पृ०) बहुभिः पदार्थैस्तद्वत्यौ। "उर्वी पृथ्वी बहुले दूरेअन्ते (ऋ० सं० २, ५,३,२)'—इति निगमः॥

(१३) गभीरे§ । (१४) गम्भीरे§ । व्याख्याते वाङ्नामसु (७८पृ०)। गम्यते सत्पुरुषैः, प्रतितिष्ठन्त्यनयोर्देवमनुष्यादयः। निगमोऽन्वेषणीयौ॥

(१५) ओण्यौ। 'ओण्ट अपनयने (भू० प०)'। 'इन् सर्वधातुभ्यः (उ० ४,११४)'। 'कृदिकारादक्तिनः (४,१,४५वा०)'—इति ङीष्। अपनयतः स्वाश्रितानां क्लेशान्। यद्वा; अवतेर्लुटि, छान्दसत्वात् सम्प्रसारणे गुणश्च, टित्त्वात् ङीप्। "अभि त्यं देवं सवितारमोण्योः (य० वा० सं० ४,२५)"—इति निगमः॥

---

* "रुद्रासो वधिं चक्रिरे सदः" ऋ० सं० १, ६, ९, २. निगमो द्रष्टव्यः।
† पु० १, १२।
‡ निरु० १, २२।
§ पु० १, ११।

(१६) चम्वौ। 'चमु अदने (भ्वा०प०)'। 'कृषिचमितनिधनिसर्जि-खर्जिभ्य ऊः (उ० १,७८)'—इति ऊ-प्रत्ययः। चमन्त्यनयोः। "उत्तान-योश्चम्वो३र्योनिरन्तः (ऋ०सं० २,३,२०,२)"—इति निगमः।

(१७) पार्श्वा*। 'स्पृश संस्पर्शने (तु०प०)'। 'स्पृशेः श्वण्-शुनौ पृ च (उ० ५,२७)'—इति श्वण्-प्रत्ययो धातोः पृ-भावश्च। णित्त्वाद् वृद्धिः। व्यत्ययेन पुंल्लिङ्गता। "पार्श्वे"—इति पाठान्तरम्। संस्पृशतो व्याप्नुतः सर्वान् पदार्थान्। निगमोऽन्वेषणीयः॥

(१८) मही†। एतदादीनि चत्वारि पृथिवीनामसु व्याख्यातानि (१२पृ०)। महत्यौ पूजनीये वा। "वेपेते भियसा मही (ऋ०सं० १,५,३१,१)"—इति निगमः॥

(१९) उर्वी‡। विस्तीर्णे, आच्छादयित्र्यौ वा स्वर्गाधःस्थितलोकस्य। निगमोऽन्वेषणीयः॥

(२०) पृथ्वी§। प्रथिता विस्तारिता ब्रह्मणा सृष्टिकाले। निगमोऽन्वेषणीयः॥

(२१) अदिती‖। देवमनुष्यादिसकलप्रपञ्चधारणेऽप्यदीने इत्यर्थः। निगमोऽन्वेषणीयः॥

(२२) अही¶। गोनामसु व्याख्यातम् (२३०पृ०)। गम्यते प्राणिभिः। निगमोऽन्वेषणीयः॥

---

* निरु० ४, २।

† पु० १, १ (१२ पृ०)।

‡ पु० १, १ (११ पृ०)।

§ पु० १, १ (१२ पृ०)।

‖ पु० १ १ (१२ पृ०)।

¶ पु० १, १०।

(२३) दूरेअन्ते*। दुः-शब्दोपपदात् एतेः 'दुरीणोलोपश्च (उ० २,१८)'—इति रक्-प्रत्ययो धातोर्लोपश्च। 'रोरि (८,३,१४)' —इति रेफलोपः, लोपे पूर्वस्य दीर्घः (६,३,१११)। 'अन्तो अततेः (निरु० ४,२५)'—इति भाष्यम्। तत्र बाहुलकात्तन् मकारस्यान्तादेशः। 'दुःखेन गम्यते दूरमतोऽस्यादेर्मध्याच्च सततगतौ भवति, न कदाचिदादौ मध्ये वास्ति'—इति स्कन्दस्वामी। दूरे अन्तमवसानगतिर्ययोः। 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इत्यलुक्। "समान्या वियुते दूरेअन्ते (ऋ० सं० ३,३,२५,२)"—इति निगमः॥

(२४) अपारे†। 'पार तीर कर्मसमाप्तौ' जुहोत्यादिरदन्तः। घञ्। समाप्तिरिति वा समाप्यतेऽनेनेति वा पारः। 'अपारे दूरपारे (निरु० ६,१)'—इति भाष्ये। 'अविद्यमानं पारमन्तं ययोः ते अपारे। दूरत्वेन पराभवं दर्शयति पुराणदृष्ट्या वा लोकपर्यन्तताम्' —इति स्कन्दस्वामी। निगमोऽन्वेषणीयः॥

अध्यायपरिसमाप्तिसूचकद्विर्वचनमिति सिद्धम्॥

इति देवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने
तृतीयाध्यायः॥ ३॥

॥ इति नैघण्टुकं नामाद्यं काण्डं समाप्तम्॥

---

* निरु० ४, २५।

† निरु० ६, १।

# (नैघण्टुक-टीका-परिशिष्टम्)

स्वरादीनीति पूर्वमुक्तस्य प्रकरणत्रयस्य (३२पृ०,३३०पृ०, ३७०पृ०), निगमदेवताकाण्डयोश्च निर्वचनं भाष्य-स्कन्दस्वामिभ्यां प्रदर्शितं विशदप्रत्ययाभावात् प्रक्रियां विशदीकृत्य क्रमेण व्याख्यायते। तत्र, निगमव्याख्यानादि यदत्राननुसंहितं, तत् तत्रैव द्रष्टव्यम्॥

(१) स्वः*। सु-पूर्वादर्त्तेरीरयतेर्वा 'अन्येभ्योऽपि दृश्यन्ते (३,२, ७५)'—इति विचि दृशि-ग्रहणस्य प्रयोगानुसरणार्थत्वादकर्त्तर्यपि भवति। ईरयतेरिकारस्याकारो व्यत्ययेन, गुणः। 'स्वरादिनिपात-मव्ययम् (१,१,३०)', सुपो लुक् (२,४,७१), रेफस्य विसर्जनीयः (८,३,१५)। शोभनमरणं गमनम् सुखाय हिताय वा यस्य, शोभनं वा प्रेरणं तमसां यस्य, सुष्ठु वा कृतो रश्मिभिः रसानादातुम्, भासं वा ज्योतिषां नक्षत्रादीनां, भासा सुष्ठु कृतः प्राप्तइति वा, स्वरादित्यः द्यौश्च। सु सुष्ठु शोभनमरणमस्यांशरूपैर्वा पुण्यवद्भिरर्यते, सुष्ठु वा पुण्यकृत ईरयति स्वृतो रसैः स्वृतो भाभिर्ज्योतिषा, स्वयमेव वा दीप्तम्। "भूर्भुवः स्वः (य०वा०सं० ३,३७)"—इति दिव उदा-हरणम्। "एभिर्नो अर्कैर्भवानो अर्वाङ् स्वर्ण ज्योतिः (ऋ०सं० ३,५,१०,३)',—इत्यादित्यस्य॥

(२) पृश्निः†। प्र-पूर्वादश्नोतेः स्पृशतेर्वा 'घृणि-पृश्नि-पार्ष्णि-

* पृ० १, १२।
† निघ० २, १४।

चूर्णि-भूर्णि (उ० ४,५२)'—इति नि-प्रत्ययः, प्राश्नेः स्पृशेश्च पृश्न-भावो निपात्यते। प्राश्नुतएनं शुक्लो वर्णः संस्पृष्टा रसान्। * * *। कृतव्याख्यानमन्यत् पूर्वेण। संस्रष्टा भासं ज्योतिषामस्पृष्टो भासेति वा पृश्निरादित्यः। द्यौस्तु संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च 'सुकृतां वा एतानि ज्योतीᳪषि यन्नक्षत्राणि (ऋ० सं० १,४,७,२. सा० भा०)'—इति श्रुतेः। "पृश्नेः पुत्रा उपमासो रभिष्ठाः (ऋ० सं० ४,३,२३,५)"—इति निगमो दिवः। "अयं वेनश्चोदयत्पृश्निगर्भाः (ऋ० सं० ८,७,७,१)"—इत्यादित्यस्य॥

(३) नाकः*। नयतेः 'पिनाकादयश्च (उ० ४,१५)'—इत्याक-प्रत्ययष्टिलोपश्च निपात्यते। नेता रसानाम्, नेता भासामात्मीयानाम्, ज्योतिषां प्रणायकश्चादित्यः। द्यौस्तु; कमिति सुखनाम, न कम् अकम् असुखम्, न अकं यत्र स नाकः। 'नभ्राण्नपान्नवेदा ६,३,७५)'—इत्यादिना नञः प्रकृतिभावः। "न वा अमुं लोकं जग्मुषे किञ्च नाकम् (निरु० २,१४)"—इति ब्राह्मणम्। अत्यन्त-सुखमित्यर्थः। "नाकस्य पृष्ठे अधि तिष्ठति श्रितः (ऋ० सं० २,१,१०,५)"—इति दिवः। तन्ने अधि नाके अस्मिन् (ऋ० सं० ८,७,१८,२)"—इति निगमश्चादित्यस्य॥

(४) गौः†। व्याख्यातं पृथिवीनामसु (६ पृ०)। गमिरन्तर्णीतण्यर्थः। गमयति रसान् मण्डलं प्रति रश्मिभिः, गच्छति वान्तरिक्षे इति गौरादित्यः। यत्पृथिव्या उपरि दूरं गता, यद्वास्यां ज्योतीᳪषि

---

* निरु० २, १४।

† पृ० १, १।

गच्छन्तीति गौः द्यौः। "गवामसि गोपतिरेकइन्द्र (ऋ० सं० ५,६, २३,६)"-इति दिवः। "उतादः परुषे गवि (ऋ० सं० ४,८,२२, ३)"—इत्यादित्यस्य॥

(५) विष्टप्*। 'ष्टभि प्रतिबन्धे (भ्वा० सौ० प०)'। वि-पूर्वात् क्विपि भकारस्य पकारो व्यत्ययेन। विष्टम्भिराविशतेऽर्थे वर्त्तते। यद्वा; विशेरेव बाहुलकाद्रूपसिद्धिः। पृथिवीतो रसानादातुमाविष्टोऽभि-निविष्टइत्यर्थः। एवमेव भासं ज्योतिषां भासा वाविष्टोव्याप्तः आदित्यः। द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च। "उद्यद्ब्रध्नस्य विष्टपम् (ऋ० सं० ६,५,६,१)"—इत्याद्युदाहरणम्॥

(६) नभः†। नयतेरसुनि गुणे 'नयः'-इति स्थिते बाहुलकात् यकारस्य भकारः। नाक-शब्देन समानोऽर्थः। अथवा भासन-शब्दस्य ह्रस्वत्वं, सकारलोपः, नकारभकारयोश्च स्थानविपर्ययः, सान्तत्वञ्च। सर्वत्र सूत्रप्राप्त्यनुक्तौ पृषोदरादित्वात् द्रष्टव्यम्। यद्वा; न भाति 'नभः। असुनि भातेष्टिलोपश्च। एतेन द्यौर्व्याख्याता। "ज्योतिष्मति प्रतिमुञ्च। ते नभः ( ? )"—"स्वर्जज्ञानोनभसा (ऋ० सं० ७,३,१४,५)"—इत्युदाहरणम्॥

इति षट् साधारणानि दिवश्चादित्यस्य॥ १,४‡॥

---

* निरु० २, १४.५, ३०।

† पु० १, ४।

‡ इमानि षट् पुरस्ताद् (१२४०) अव्याख्यातानि।

इदमाद्युपमानामानि। भाष्यकारेण स्कन्दस्वामिना च विस्तरेण व्याख्यातानि (निरु० ३,१३-१८)। निपातप्रायत्वात् शब्दनिर्वचनस्यावक्तव्यत्वात् उदाहरणमात्रमत्र प्रदर्श्यते।—

(१) इदमिव*। (२) इदं यथा†। अत्र इदंशब्द उपमानशब्दसन्निधानाय प्रयुक्तः। इवादयस्तु निपाताः, पराश्रयस्योपमानत्वस्य धर्मस्य प्रतिपादनार्थाः। "इन्द्र इवेह ध्रुव स्तिष्ठ (ऋ० सं० ८, ८,३१,२)"—"यथावातो यथा वनम् (ऋ० सं० ४,४,२०,४)"॥

(३) अग्निर्न ये‡। अत्र न-शब्द उपमानार्थः। "अग्निर्न ये भ्राजसा रुक्मवक्षसः (ऋ० सं० ८,३,१२,२)"॥

(४) "चतुरश्चिद्ददमानात्"§ (ऋ० सं० १,३,२३,४)। अत्र चिच्छब्दः॥

(५) "ब्राह्मणा व्रतचारिणः (ऋ० सं० ५,७,३,१)"। उपमाप्रतिपादनेनादिलोपाल्लुप्तोपमः॥

(६) "वृक्षस्य नु ते पुरुहूत वयाः (ऋ० सं० ४,६,१७,३)"‖। अत्र नू-शब्दः॥

(७) जार आ भगम्। "उदीरय पितरा जार आ भगम् (ऋ० सं० ७,६,१०,१)"। अत्र आकारः॥

---

* निरु० १, ४; १०. ९, २०।
† निरु० ३, १५।
‡ निरु० १, ४. ७, ३१. १०, १२।
§ प० ४, २। निरु० १, ४. ५, ५. १०, २९।
‖ पु० २, १५।

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.

57 AND 59, LUDGATE HILL, LONDON, E. C.

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| Chaitanya-chandrodaya, Nátaka, 3 fasci. ... Rs. | 1 | 14 |
| Srauta Sútra, A's'valáyana, 11 fasci. | 6 | 14 |
| ——— Láṭyáyana, 9 fasci. | 5 | 10 |
| S'ankara Vijaya, 3 fasci. | 1 | 14 |
| Daśa-rúpa, 3 fasci. | 1 | 14 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | 1 | 4 |
| Sánkhya-sára, 1 fasci. | 0 | 10 |
| Lalita-vistara, 6 fasci. | 3 | 12 |
| „ „ Translation, 1 fasci. | 1 | 0 |
| Taittiríya Bráhmaṇa, 24 fasci. | 15 | 0 |
| Taittiríya Sañhitá, 31 fasci. | 19 | 6 |
| Taittiríya A'raṇyaka, 11 fasci. | 6 | 14 |
| Maitri Upanishad, 3 fasci. | 1 | 14 |
| A's'valáyana Grihya Sútra, 4 fasci. | 2 | 3 |
| Mimáñsá Darsana, 15 fasci. | 9 | 6 |
| Táṇḍya Bráhmaṇa, 19 fasci. | 11 | 14 |
| Gopatha Bráhmaṇa, 2 fasci. | 1 | 10 |
| A'tharvana Upanishads, 5 fasci. | 3 | 2 |
| Agni Puráṇa, 14 fasci. | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. | 23 | 12 |
| Gopála Tápaní, 1 fasci. | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. | 1 | 14 |
| Chaturvarga Chintámaṇi, 36 fasci. | 22 | 8 |
| Gobhilíya Grihya Sútra, 12 fasci. | 7 | 8 |
| Piñgala Chhandah Sútra, 3 fasci. | 1 | 14 |
| Taittiríya Prátis'ákhiya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. | 2 | 8 |
| „ „ Translation, Part II, 1 fasci. | 1 | 0 |
| Rájatarangini, | 4 | 0 |
| Mahábhárata, vols. III. and IV., | 40 | 0 |
| Puráṇa Sangraha, | 1 | 0 |
| Páli Grammar, 2 fasci. | 1 | 4 |
| Aitareya A'raṇyaka of the Rig Veda, 5 fasci. | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. | 2 | 8 |
| Brahma Sútra, English, | 1 | 0 |
| Kátantra, 6 fasci. | 6 | 0 |
| Kámandakíya Nítisára, 4 fasci. (Fasci. 1, out of stock.) | 2 | 8 |
| Bhámati, 8 fasci. | 5 | 0 |
| Aphorisms of Sáṇḍalya, English, Fasci. 1., | 0 | 10 |
| Vayu Puráṇa, 6 fasci. | 3 | 12 |
| Kathá Sarit Ságara, English Translation, [illegible] Fasci. | 7 | 0 |

| | Rs. | |
|---|---|---|
| Prakrit Lakshanam, fasci. 1., | 1 | 8 |
| Nirukta, 2 fasci | 1 | 4 |
| Vishnusmriti, fasci. 1., | 0 | 10 |
| Srauta Sutra of Apastamba, fasci. 1., | 0 | 10 |

## *Arabic & Persian Series.*

| | Rs. | |
|---|---|---|
| Dictionary of Arabic Technical Terms, 20 fasci., complete, | 25 | 0 |
| Risálah-i-Shamsiyah, (Appendix to Do. Do.), | 1 | 4 |
| Fihrist Ṭúsí, 4 fasci. | 3 | 0 |
| Nukhbat-ul-Fikr, | 0 | 10 |
| Futúh-ul-Shám, Wáqidí, 9 fasci. | 5 | 10 |
| Futúh-ul-Shám, Azadí, 4 fasci. | 2 | 8 |
| Maghází of Wáqidí, 5 fasci. | 3 | 2 |
| Isábah, 28 fasci., with supplement, | 20 | 14 |
| Táríkh-i-Fírúz Sháhí, 7 fasci. | 4 | 6 |
| Táríkh-i-Baihaqí, complete in 9 fasci. | 5 | 10 |
| Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. | 9 | 6 |
| Wís o Rámín, 5 fasci. | 2 | 3 |
| Iqbálnámah-i-Jahángírí, complete in 3 fasci. | 1 | 14 |
| 'Álamgírnámah, 13 fasci., with index, | 8 | 2 |
| Pádsháhnámah, 19 fasci., with index, | 11 | 14 |
| Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, | 12 | 12 |
| Áín-i-Akbarí, Persian text, 4to., 22 fasci. | 27 | 8 |
| Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, | 12 | 4 |
| Farhang-i-Rashídí, 14 fasci., complete, | 17 | 8 |
| Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, | 2 | 0 |
| Akbarnámah, 17 fasci. with Index, | 20 | 0 |
| Maáṣir-i-'Álamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, | 3 | 12 |
| Haft Ásmán, history of the Persian Maṣnawí, | 1 | 4 |
| Ṭabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. | 10 | 0 |
| Ṭabaqát-i-Náçirí, Persian text, 5 fasci. | 3 | 2 |
| History of the Caliphs (English Translation), 6 fasci. | 6 | 0 |

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XX, 1843-51, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXIV, XXVI, XXVII, 1855, 1857-58, and vols. XXX, XXXIII to XLIX, 1861, 1864-80, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

| | Rs. | |
|---|---|---|
| Asiatic Researches, vols. VI. to XI. and vols. XIII. XVII. XIX. and XX. each, | 10 | 0 |
| Do. Do. Index, | 5 | 0 |
| Catalogue of Fossil Vertebrata, | 2 | 0 |
| ——— of Arabic and Persian Manuscripts, | 1 | 0 |
| Tibetan Dictionary, | 10 | 0 |
| ——— Grammar, | 8 | 0 |
| Notices of Sanskrit Manuscripts, 14 fasci. | 14 | 0 |
| Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. | 1 | 0 |
| Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. | 2 | 0 |
| Aborigines of India, by B. H. Hodgson, | 3 | 0 |
| Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, | 2 | 0 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, | 1 | 8 |
| 'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., | 16 | 0 |
| Analysis of the Sher Chín, by Alexander Csoma de Körös, | 1 | 0 |
| Khazánat-ul-'ilm, | 4 | 0 |
| Sharáyat-ul-Islám, | 4 | 0 |
| Anís-ul-Musharrihín, | 3 | 0 |
| Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar. | 2 | 0 |
| Moore and Hewitson's Descriptions of New Indian Lepidoptera, Part I, with 3 Coloured Plates, | 6 | 0 |

OF BOOKS FOR SALE

अत्र ताण्ड्यकम्* —'पूर्वपक्षा...
सर्वं हरति (६,१,१)'—इति ; ...RARY OF THE
वा इन्द्रस्य हरी'—इत्यैतरेयब्राह्मणम्...
—इति यजुर्ब्राह्मणम्† (४,४,३६)। ...
रथम् (ऋ॰ सं॰ २,३,५,१)"—इति निग... OF BENGAL,

(२) रोहितः‡। 'हसरुहियुषिभ्य इति...
इति-प्रत्ययः। रोहन्ति आरोहन्ति रथं वहन्... CUTTA,
"रोहिदस्व शुचिव्रत (ऋ॰ सं॰ ६,३,२२,१)'...

(३) हरितः§। पूर्ववत् इतिः (उ॰ १,९४)।...
वा स्वभासा। यद्वा; हरिच्छब्दः पीतवर्णवचने...
"यदेतदयुक्ता हरितः सधस्थात् (ऋ॰ सं॰ १,८,७,४)"—...NER & C...

(४) रासभौ। 'रासृ शब्दे (भू॰ आ॰)'। 'रासिवल्लिभ्याञ्च (उ॰...
३,१२१)'—इत्यभच्-प्रत्ययः। रासते शब्दं करोतीति रा...
रासभौ। 'गर्दभरथेनाश्विना उदजयताम्'—इति ब्राह्मणम् (ऐ...
२,३)। "युञ्जाथां रासभं रथे (ऋ॰ सं॰ ६,६,८,२)"—"...
नासत्या सहस्रमाजा (ऋ॰ सं॰ १,८,८,२)"—इति च निग...

(५) अजाः‖। 'अज गतिक्षेपणयोः (भू॰ प॰)'। पचाद्यच्...
१३४)। वीभावाभावो व्यत्ययेन। अजन्ति गच्छन्ति सर्वतः चि...
वा तमः। "अहेळमानो ररिवाँ अजाश्व अवस्यतामजाश्व ...
सं॰ २,२,२,४)"—इति निगमः॥

| Rs. | As. |
|---|---|
| 3 | 2 |
| 2 | 8 |
| 8 | 12 |
| 3 | 2 |
| 0 | 10 |
| 6 | 14 |
| 1 | 0 |
| | 0 |
| | 0 |
| | 4 |
| | 14 |
| | 12 |
| | 4 |
| | 4 |
| | 2 |

---

* सामवेदाष्टब्राह्मणानामादिमम्। † शतपथाभिधानमिति यावत्।
‡ पु॰ १२। § पु॰ ३। ‖ निरु॰ ४, २५. ६, ४।

(८) "मेषो भूतो३ऽभि यन्नयः (ऋ० सं० ५,७,२४,५)"* । अत्र भूत-शब्देनोपमोच्यते ॥

(९) तद्रूपः† । (१०) तद्वर्णः‡ । रूपशब्देन वर्णशब्देन चोत्तरपदेन समासादुपमा प्रतीयते ॥

(११) तद्वत्§ । पूर्ववत्तच्छब्दस्यार्थः । "प्रियमेधवदत्रिवत् (ऋ० सं० १,३,३१,३)" । 'तेन तुल्यं क्रियाचेद् वतिः (५,१,११५)' ॥

(१२) तथा‖ । "तम्प्रत्नथा पूर्वथा विश्वथेमथा (ऋ० सं० ४, १,२३,१)" । 'प्रत्नपूर्वविश्वेमात् थाल् छन्दसि (५,३,१११)'—इति इवार्थेऽयं थाल् विहितः ॥

इति द्वादशोपमानामानि ॥ ३,१३¶ ॥

"तथा"—इत्यस्यानन्तरं "सिंहः"—इति केषुचित् कोशेषु दृश्यते, तन्न पठनीयम्, 'अथ लुप्तोपमानि (निरु० ३,१८)'—इत्यादिभाष्यस्य तु "ब्राह्मणा व्रतचारिणः (५)"—इति पूर्वमुक्तस्य लुप्तोपमस्य प्रपञ्चत्वात् ॥

———

* "भूतम्" पृ० १, १२ ।

† पृ० ३, ७ ।

‡ निरु० २, ३ ।

§ "वदिति सिद्धोपमा" निरु० ३, १७ ।

‖ "थाद्दति च" निरु० ३, १६ ।

¶ एतान्यपि न व्याख्यातानि दुरवात् (३३०४०) ।

(१) प्रपित्वे*। (२) अभीके†। इत्यासन्नस्य। प्रपूर्वादाप्नोतेर्निष्ठायां प्राप्त-शब्दस्य प्रपित्व-भावः। यद्वा; 'इत्वनादयोऽन्येभ्योऽपि दृश्यन्ते'—इतीत्वन्-प्रत्यये बाहुलकादाप्नोतेराकारलोपः। पित्व-शब्द आसन्नार्थः। प्रकृष्टदेशकालयोः प्राप्तिः प्रपित्वे इति॥ ॥अभिपूर्वादञ्चतेः 'अलीकादयश्च (उ० ४,२५)-इतीकन् प्रत्ययो धातुलोपश्च निपात्यते। अभ्यक्ते आसन्ने इत्यर्थः। सोपसर्गौ सप्तम्यन्तौ यथादृष्टाविति पठितौ॥ "आपित्वे नः प्रपित्वे तूय मागहि (ऋ० सं० ५,७,३०,३)"—"अभीके चिदु लोककृत् (ऋ० सं० ८,७,२१,१)"—इत्यपि निगमौ॥

(३) दभ्रम्‡। (४) अर्भकम्§। इत्यल्पस्य। दभ्रमिति दभ्नोतेर्बधकर्मणः 'स्फायितञ्चि (उ० २,१२)'-इत्यादिना रक्, 'अनिदिताम् (६,४,२४)'-इति न-लोपः। सुदभ्रं सुच्छेदम् अल्पत्वात्॥ ॥ हरतेः 'अर्भकश्च पृथुक पाका वयसि'-इति क-प्रत्यये, हकारस्य भकारे गुणे रपरत्वे अकारे चोपजने च अर्भकमिति निपात्यते। अवहृतमूनपरिमाण इत्यर्थः॥ "मा मे दभ्राणि मन्यथाः (ऋ० सं० २,१,११,७)"-"नमो महद्भ्यो नमो अर्भकेभ्यः (ऋ० सं० १,२,२४,३)॥

(५) तिरः॥। (६) सतः¶। इति प्राप्तस्य। अप्राप्तस्येत्यपरः पाठः। तरतेरसुनि बाहुलकात् अकारस्येकारः। तीर्णं प्राप्तमागतम्॥ ॥ सर्त्तेरसुनि रेफस्य वकारः। सतः संसृतम्॥ अप्राप्तस्येति पाठे पराजितं

---

*, †, ‡ निरु० ३, २०।
§ निरु० ३, २०. ४, १५।
|| निरु० ३, २०. ११, २२।
¶ निरु० ३, २०।

